॥ श्रीः ॥

श्रीईश्वरकृष्णविरचित साङ्ख्यकारिका

षट्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचित

# साङ्ख्यतत्त्वकौमुदीसहिता।

सा चेयं

कलिकातास्थराजकीयसंस्कृतपाठशालाध्यापकैर्महा-

महोपाध्यायपण्डितलक्ष्मणशास्त्रिमहाशयानां सम्मत्या

द्राविडोपाह्व—राजेश्वरशास्त्रिणा

संशोधिता।

विषमस्थलेषु उपयुक्ताभिष्टिप्पणीभिर्विभूष्य पृथक्

मुद्रिताभिः कारिकाभिः, अकारादिक्रमोपन्य-

स्तया कारिकासूच्या विषयसूची-

शुद्धिपत्राभ्यां च सह

चौखम्बासंस्कृतग्रन्थमाला—काशीसंस्कृतग्रन्थ-

मालादिप्रकाशक श्रीयुतहरिदासगुप्तात्मज

श्रीयुतजयकृष्णदासगुप्तमहाशयेन

स्वकीय 'विद्याविलास'नाम्नि मुद्रायन्त्रे

मुद्रयित्वा प्रकाशिता।

---

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
*Benares.*
1917.

॥ श्रीः ॥

श्रीईश्वरकृष्णविरचित साङ्ख्यकारिका

षट्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचित ।

# साङ्ख्यतत्त्वकौमुदीसहिता।

सा चेयं

कलिकातास्थराजकीयसंस्कृतपाठशालाध्यापकैर्महा-

महोपाध्यायपण्डितलक्ष्मणशास्त्रिमहाशयानां सम्मत्या

द्राविडोपाह्व—राजेश्वरशास्त्रिणा

संशोधिता ।

विषमस्थलेषु उपयुक्ताभिष्टिप्पणीभिर्विभूष्य पृथक्

मुद्रिताभिः कारिकाभिः, अकारादिक्रमोपन्य-

स्तया कारिकासूच्या विषयसूची—

शुद्धिपत्राभ्यां च सह

चौखम्बासंस्कृतग्रन्थमाला—काशीसंस्कृतग्रन्थ-

मालादिप्रकाशक श्रीयुतहरिदासगुप्तात्मज

श्रीयुतजयकृष्णदासगुप्तमहाशयेन

स्वकीय 'विद्याविलास'नाम्नि मुद्रायन्त्रे

मुद्रयित्वा प्रकाशिता ।

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press,*

BENARES.

---

1917.

॥ श्रीगुरुः शरणम् ॥

षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचितायाः

# साङ्ख्यतत्त्वकौमुद्या

# भूमिका ।

—:o:—

विदाङ्कुर्वन्त्वेतद्विद्वांसो यत् षड्दर्शनटीकाकृद्वाचस्पतिमिश्रविरचितोऽयं साङ्ख्यतत्त्वकौमुदीग्रन्थोऽस्माभिरिदानीं मुद्रयित्वा प्रकाश्यत इति। यद्यप्ययं ग्रन्थो बहुवारं बहुभिस्तत्तट्टीकासहकारेण पार्थक्येन च मुद्रित एव, तथाऽपि न तन्मुद्रणं विद्यार्थिजनानां साङ्ख्यशास्त्रस्याऽनायासेन बोधौपयिकमभूत्। साङ्ख्यशास्त्रप्रतिपाद्यो विषयस्तावन्निसर्गदुरवबोधः, आचार्यवाचस्पतिमिश्रलेखश्च दुरवगाहः, तयोर्मेलने तावत्कथमपरिपक्वबुद्धिभिश्छात्रैरेतत्तात्पर्यमवगन्तुं शक्यमिति हि सुधियो जानन्त्येव। अपि च साङ्ख्यतत्त्वकौमुदीव्याख्यास्वपि न काऽपि व्याख्या कौमुद्युक्तपदार्थतत्त्वबोधोपयुक्ता समस्तीति च विचार्य चौखम्बासंस्कृतग्रन्थमालासम्पादकेन श्रीजयकृष्णदासगुप्तमहोदयेन प्रार्थितोऽहममुं ग्रन्थं मुद्रयितुं प्रवृत्तः। स चाऽयं ग्रन्थः कारिकापाठेच्छूनां सौकर्याय पृथक् मुद्रितया साङ्ख्यकारिकया विषमस्थलोपन्यस्ताभिरुपयुक्ताभिष्टिप्पणीभिः, अकारादिक्रमापन्य-

स्तेन कारिकासूचीपत्रेण विषयसूचीशुद्धिपत्राभ्यां च सहितो मुद्रितः। निध्यातश्चेदं पुस्तकं मुद्रणसमयेऽस्मत्पितृचरणैः महामहोपाध्यायपदवीकैः पूज्यपादश्रीलक्ष्मणशास्त्रिमहोदयैरपि। आशास्यते मुद्रितममुं ग्रन्थमवलोक्य सफलयिष्यन्ति मे परिश्रमं सुधिय इति।

आचार्यवाचस्पतिमिश्रविरचितस्य साङ्ख्यतत्त्वकौमुदीग्रन्थस्य तु महिमा नाऽस्माभिर्वर्णयितुं शक्यः। यतो हि एतद्ग्रन्थमूलभूता कारिका इदानीं साङ्ख्यसूत्रस्थानाभिषिक्ता तत्तुल्यप्रामाण्या च श्रीशङ्कराचार्यप्रभृतीनामप्यनुमतेति न तिरोहितं विदुषाम्। यद्यपि कपिलसूत्राण्यपि इदानीं प्रकाशितानि सन्ति, परं तेषां चिरन्तनत्वेऽधुना विवाद एव दृश्यत इति न तेषां कारिकासमं प्रमाणत्वं सर्वैरिष्यते। अपि च वेदान्तदर्शनादिषु शङ्करभगवत्पादादिभिः साङ्ख्यशास्त्रीयपदार्थनिरूपणसमये प्रमाणतया कारिका एव समुद्धृताः, न पुनः सूत्राणि, तस्मात्कारणात् सूत्राणि विलुप्तानीत्येव प्रायः सर्वेऽपि संमन्वते। एतावता चैतत्सिद्धं यत्कारिकासु यादृशो विश्वासः समेषां तादृशो न सूत्रेष्वपीति किमु वर्णनीयोऽस्माभिः कारिकाया महिमा? एतादृश्याश्च कारिकायास्तत्त्वकौमुदीव नाऽन्या काचन टीका कारिकाशयावबोधनपटीयसी दृष्टेति कौमुद्या उत्कर्षो वचसामगोचर एवेति न तिरोहितं विदुषाम्।

ग्रन्थस्याऽस्याऽवलोकनेऽपि ज्ञायेताऽस्य महिमेति च न पुनर्विशेषतो विज्ञापनीयम्।

अस्य च ग्रन्थस्य तत्त्वविभाकरनाम्न्या श्रीवंशीधरमिश्रविरचितया बृहत्यैकया टीकया सह मुद्रणं श्रीजयकृष्णदासगुप्तमहोदयेनैव क्रियते । अल्पेनैव कालेन तत्सम्पूर्णं भविष्यतीत्यप्याशास्यते ।

किं पुनरस्माभिरधिकं निवेदनीयम् ? अस्य ग्रन्थस्य विषये यत्किञ्चिदुच्यते तत्सर्वमल्पमेव भवेदित्यालोच्य विरम्यतेऽतः साहसात् ।

इदमपि विदुषो विदाङ्कुर्वन्तु–प्राचीनविद्यारसिकश्रीबाबूगोविन्ददासमहोदयैस्तत्त्वकौमुद्या लिखितपुस्तकाद्यर्पणेन शोधनकार्ये सम्यगुपकृता वयमिति तेभ्यः परःशतान् धन्यवादान् वितरामः । अपि चैतद्ग्रन्थमुद्रणभारवाहिने प्राचीनदुर्लभग्रन्थमुद्रणगृहीतदीक्षाय श्रीजयकृष्णदासगुप्ताय शुभानि वाञ्छन्तु गुणैकपक्षपातिनः सुधियः, वितरताच्च परमेश्वरोऽमुष्मै भद्रामिति समाशास्याऽस्मादृशजनदुष्करेऽमुष्मिन् कार्ये परमेश्वरमेव शरणतयोपगम्य विरम्यतेऽतः प्रयत्नादिति ।

अतिपरिश्रमेण संशोधितेऽप्यस्मिन् ग्रन्थे मादृशाल्पज्ञजनमतिमान्द्यात् सीसकाक्षरयोजकदोषाद्वा समुत्पन्नानि स्खलितानि संशोधयन्त्विवति च प्रार्थयति–

निवेदयति–

विदुषामनुचरः

श्रीराजेश्वरशर्मा द्राविडः.

॥ श्रीः ॥

# साङ्ख्यकारिका ।

दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥
दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥
मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥
दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥
प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकमाप्तस्मृतिराप्तवचनं तु ॥ ५ ॥
सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चाऽसिद्धं परोक्षमाप्तागमात्सिद्धम् ॥ ६ ॥
अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च ॥ ७ ॥
सौक्ष्म्यात्तदनुपलब्धिर्नाऽभावात् कार्यतस्तदुपलब्धेः ।
महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥ ८ ॥
असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥
हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥
त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥
सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चाऽर्थतो वृत्तिः ॥ १३ ॥
अविवेक्यादेः सिद्धिस्त्रैगुण्यात्तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात् कार्यस्याऽव्यक्तमपि सिद्धम् ॥ १४ ॥
भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५ ॥
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।
परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥
सङ्घातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥
जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥
तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥
तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ २० ॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥
प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥
अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥
अभिमानोऽहङ्कारस्तस्मात् द्विविधः प्रवर्तते सर्गः ।

एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव ॥ २४ ॥
सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥
बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।
वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः ॥ २६ ॥
उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥
शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥
स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥
युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥
स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ॥ ३१ ॥
करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ॥
कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥
अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥
बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।
वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥३४॥
सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥
एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्याऽर्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥

सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥३७॥
तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ॥
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥
सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥
पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम ॥ ४० ॥
चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम ॥ ४१ ॥
पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥
सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।
दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥४३॥
धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चाऽपवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥
वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥ ४५ ॥
एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात्तस्य च भेदास्तु पञ्चाशत् ॥ ४६ ॥
पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥
भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥
एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।

सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥
आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः ॥ ५० ॥
ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥
न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः।
लिङ्गाख्यो भावाख्यस्तस्मात् द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥
अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।
मानुषकश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥
ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥
तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।
लिङ्गस्याऽविनिवृत्तेस्तस्मात् दुःखं स्वभावेन ॥ ५५ ॥
इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥
वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥
औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥
रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥
नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः।
गुणवत्यगुणस्य सतस्तस्याऽर्थमपार्थकं चरति ॥ ६० ॥
प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥

तस्मान्न बध्यतेऽद्धा न मुच्यते नाऽपि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥
रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥
एवं तत्त्वाभ्यासान्नाऽस्मि न मे नाऽहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥
तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः ॥६५॥
दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नाऽस्ति सर्गस्य ॥६६॥
सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवत् धृतशरीरः ॥ ६७ ॥
प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥
पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥
एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन बहुधा कृतं तन्त्रम् ॥७०॥
शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
सङ्क्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चाऽपि ॥७२॥

॥ इतीश्वरकृष्णविरचितसाङ्ख्यकारिका समाप्ता ॥

साङ्ख्यकारिकाया अकारादिक्रमेण-

# सूची ।

—:o:—


| | अ. | का. | पृ. |
|---|---|---|---|
| १ | अतिदूरात्सामीप्यात् | ७ | ५० |
| २ | अध्यवसायो बुद्धिः | २३ | १०१ |
| ३ | अन्तःकरणं त्रिविधं | ३३ | ११६ |
| ४ | अभिमानोऽहङ्कारः | २४ | १०४ |
| ५ | अविवेक्यादेः सिद्धिः | १४ | ८३ |
| ६ | अष्टविकल्पो दैवः | ५३ | १४७ |
| ७ | असदकरणादुपादान | ९ | ५८ |
| | आ. | | |
| ८ | आध्यात्मिक्यश्चतस्रः | ५० | १३९ |
| | इ. | | |
| ९ | इत्येष प्रकृतिकृतः | ५६ | १५० |
| | उ. | | |
| १० | उभयात्मकमत्र मनः | २७ | १०७ |
| | ऊ. | | |
| ११ | ऊर्ध्वं सत्त्वविशालः | ५४ | १४८ |
| १२ | ऊहः शब्दोऽध्ययनं | ५१ | १४३ |

| | ए. | का. | पृ. |
|---|---|---|---|
| १३ | एकादशेन्द्रियवधाः | ४९ | १३७ |
| १४ | एतत् पवित्रमग्र्यं | ७० | १६६ |
| १५ | एते प्रदीपकल्पाः | ३६ | १२० |
| १६ | एवं तत्त्वाभ्यासात् | ६४ | १५८ |
| १७ | एष प्रत्ययसर्गः | ४६ | १३३ |
| | औ. | | |
| १८ | औत्सुक्यनिवृत्त्यर्थं | ५८ | १५४ |
| | क. | | |
| १९ | करणं त्रयोदशविधं | ३२ | ११५ |
| २० | कारणमस्त्यव्यक्तं | १६ | ८५ |
| | च. | | |
| २१ | चित्रं यथाऽऽश्रयमृते | ४१ | १२७ |
| | ज. | | |
| २२ | जननमरणकरणानां | १८ | ९४ |
| | त. | | |
| २३ | तत्र जरामरणकृतं | ५५ | १४९ |
| २४ | तन्मात्राण्यविशेषाः | ३८ | १२३ |
| २५ | तस्माच्च विपर्यासात् | १९ | ९६ |
| २६ | तस्मात्तत्संयोगात् | २० | ९८ |
| २७ | तस्मान्न बध्यतेऽद्धा | ६२ | १७७ |

| | | का. | पृ. |
|---|---|---|---|
| २८ | तेन निवृत्तप्रसवां | ६५ | १६१ |
| २९ | त्रिगुणमविवेकि विषयः | ११ | ७२ |
| | **द.** | | |
| ३० | दुःखत्रयाभिघातात् | १ | २ |
| ३१ | दृष्टमनुमानमाप्त | ४ | १८ |
| ३२ | दृष्टवदानुश्रविकः | २ | ८ |
| ३३ | दृष्टा मयेत्युपेक्षकः | ६६ | १६२ |
| | **ध.** | | |
| ३४ | धर्मेण गमनमूर्ध्वं | ४४ | १३० |
| | **न.** | | |
| ३५ | न विना भावैर्लिङ्गं | ५२ | १४६ |
| ३६ | नानाविधैरुपायैः | ६० | १५५ |
| | **प.** | | |
| ३७ | पञ्च विपर्ययभेदाः | ४७ | १३४ |
| ३८ | पुरुषस्य दर्शनार्थं | २१ | ९९ |
| ३९ | पुरुषार्थज्ञानमिदं | ६९ | १६६ |
| ४० | पुरुषार्थहेतुकमिदं | ४२ | १२८ |
| ४१ | पूर्वोत्पन्नमसक्तं | ४० | १२५ |
| ४२ | प्रकृतेर्महांस्ततोऽहङ्कारः | २२ | १०० |

| | | का. | पृ. |
|---|---|---|---|
| ४३ | प्रकृतेः सुकुमारतरं | ६१ | १५६ |
| ४४ | प्रतिविषयाध्यवसायो | ५ | २३ |
| ४५ | प्राप्ते शरीरभेदे | ६८ | १६५ |
| ४६ | प्रीत्यप्रीतिविषादा | १२ | ७५ |
| | **ब.** | | |
| ४७ | बुद्धीन्द्रियाणि चक्षुः- | २६ | १०७ |
| ४८ | बुद्धीन्द्रियाणि तेषां | ३४ | ११८ |
| | **भ.** | | |
| ४९ | भेदस्तमसोऽष्टविधः | ४८ | १३५ |
| ५० | भेदानां परिमाणात् | १५ | ८४ |
| | **म.** | | |
| ५१ | मूलप्रकृतिरविकृतिः | ३ | १४ |
| | **य.** | | |
| ५२ | युगपच्चतुष्टयस्य तु | ३० | ११२ |
| | **र.** | | |
| ५३ | रङ्गस्य दर्शयित्वा | ५९ | १५४ |
| ५४ | रूपैः सप्तभिरेव तु | ६३ | १५७ |
| | **व.** | | |
| ५५ | वत्सविवृद्धिनिमित्तं | ५७ | १५२ |
| ५६ | वैराग्यात्प्रकृतिलयः | ४५ | १३२ |

| | श. | का. | पृ. |
|---|---|---|---|
| ५७ | शब्दादिषु पञ्चानां | २८ | ११० |
| ५८ | शिष्यपरम्परयाऽऽगतं | ७१ | १६७ |
| | स. | | |
| ५९ | सङ्घातपरार्थत्वात् | १७ | ९० |
| ६० | सत्त्वं लघु प्रकाशकं | १३ | ७९ |
| ६१ | सप्तत्यां किल येऽर्थाः | ७२ | १६७ |
| ६२ | सम्यग्ज्ञानाधिगमात् | ६७ | १६४ |
| ६३ | सर्वं प्रत्युपभोगं | ३७ | १२१ |
| ६४ | सात्त्विक एकादशकः | २५ | १०५ |
| ६५ | सान्तःकरणा बुद्धिः | ३५ | ११९ |
| ६६ | सामान्यतस्तु दृष्टात् | ६ | ४८ |
| ६७ | सांसिद्धिकाश्च भावाः | ४३ | १२९ |
| ६८ | सूक्ष्मा मातापितृजाः | ३९ | १२४ |
| ६९ | सौक्ष्म्यात्तदनुपलब्धिः | ८ | ५२ |
| ७० | स्वालक्षण्यं वृत्तिः | २९ | ११० |
| ७१ | स्वां स्वां प्रतिपद्यन्ते | ३१ | ११३ |
| | ह. | | |
| ७२ | हेतुदमनित्यमव्यापि | १० | ६९ |

॥ श्रीः ॥

# साङ्ख्यतत्त्वकौमुदीस्थविषयसूची ।

## कारिका. १.


| विषयः. | पृ. | पं. |
|---|---|---|
| त्रिगुणात्मकप्रकृतिपुरुषयोर्नमस्काररूपं मङ्गलम्। | १ | ३ |
| गुरुपरम्परानमस्काररूपं मङ्गलम्। | २ | १ |
| प्रतिपित्सितार्थप्रतिपादनेनैव शास्त्रस्योपादेयत्वं भवतीति व्यवस्थाप्य प्रारिप्सितशास्त्रस्य परमपुरुषार्थसाधनरूपातिप्रतिपित्सितार्थप्रतिपादकत्वेनोपादेयत्वप्रतिपादनपरतया कारिकावतारणम्। | " | ३ |
| शास्त्रविषयस्याऽजिज्ञास्यत्वप्रयोजकखण्डनायाऽऽदौ प्रयोजकविकल्पाः। | ३ | ३ |
| दुःखमेव नाऽस्ति, सत्त्वेऽपि वा न जिहासितमिति-प्रयोजकद्वयखण्डनाय 'दुःखत्रयाभिघातात्' इति कारिकायामुक्तमिति कथनम्। | ४ | ४ |
| दुःखत्रयविभागः। | " | ६ |
| आध्यात्मिकदुःखविभागः। | " | ८ |
| शारीरदुःखनिरूपणम्। | " | ९ |
| मानसदुःखनिरूपणम्। | " | १० |
| अनयोरान्तरत्वेनाऽऽध्यात्मिकत्वोपपादनम्। | " | ११ |
| इतरयोर्दुःखयोर्बाह्योपायसाध्यत्वकथनं, तद्विभागश्च। | " | १३ |

| विषयः. | पृ. | पं. |
| --- | --- | --- |
| आधिभौतिकदुःखनिरूपणम् । | ” | १४ |
| आधिदैवकदुःखनिरूपणम् । | ” | १५ |
| प्रासङ्गिकदुःखनिरूपणानन्तरं कुत्र पुनरस्योपयोग इति शङ्कायाः पूर्वोक्तविकल्पद्वयनिराकरणमुखेन तदौपायिकत्वसूचनेन निरासः । | ” | १६ |
| सत्कार्यवादिसाङ्ख्यमते दुःखस्य नित्यत्वेऽपि तन्निवृत्त्युपपादनम् । | ५ | १ |
| ‘तदपघातके हेतौ’ इत्यत्र तदादिशब्दार्थकथनम् । | ” | ३ |
| उपसर्जनस्य तदा परामर्शोपपादनम् । | ” | ४ |
| शास्त्रप्रतिपाद्यविषयस्यैव तदपघातकत्वकथनम् । | ” | ५ |
| जिज्ञासाया दृष्टेऽपार्थत्वशङ्का । | ” | ७ |
| एतादृशाशङ्कोपपादनम् । | ” | ८ |
| दृष्टापायसम्भवकथनम् । | ६ | ५ |
| एतादृशाशङ्कानिरासः । | ” | १३ |
| तदुपपादनम् । | ” | १८ |
| ग्रन्थादावमङ्गलदुःखशब्दप्रयोगस्य तदपघातविवक्षाधीनत्वेन मङ्गलत्वसाधनम् । | ७ | ५ |


## कारिका. २.


| विषयः. | पृ. | पं. |
| --- | --- | --- |
| द्वितीयकारिकावतारणाय दुःखनिवृत्तेरदृष्टोपायसाध्यत्वशङ्का । | ” | ८ |
| तदुपपादनम् । | ” | १० |
| स्वर्गस्यैकान्तिकात्यन्तिकदुःखनिवृत्तिजनकत्वसमर्थनम् । | ” | ११ |

| विषयः. | पृ. | पं. |
|---|---|---|
| तस्य क्षयित्वशङ्कानिरासः । | ” | १६ |
| उक्तार्थे श्रुत्युदाहरणम् । | ८ | १ |
| एवमप्रक्षयित्वं स्वर्गे प्रसाध्य शास्त्रविषयजिज्ञासा न कर्तव्येति शङ्कया द्वितीयकारिकावतारणम् । | ” | २ |
| 'आनुश्राविक'शब्दार्थकथनम, तस्य वेदापौरुषेयत्वबोधकत्वसमर्थनं च । | ९ | ३ |
| कारिकान्तर्गत-'दृष्टवत'इति प्रतिज्ञार्थकथनम् । | ” | ८ |
| 'आनुश्रविक'शब्दस्य कर्मकलापमात्रबोधकत्वसमर्थनं, अन्यथा तत्त्वज्ञानस्याऽप्यानुश्रविकत्वेन तस्य पक्षतावच्छेदकाक्रान्तत्वापत्तिरितिदोषकथनं च । | ” | ९ |
| तत्त्वज्ञानविधायकश्रुत्युदाहरणम् । | १० | १ |
| 'स ह्यविशुद्धि-'इत्याद्यंशस्योक्तप्रतिज्ञायां हेतुप्रतिपादकत्वकथनम् । | ” | ४ |
| यागादेरविशुद्धिनिरूपणम् । | ” | ५ |
| अत्र विषये पञ्चशिखाचार्यसंमतिकथनम् । | ” | ६ |
| तद्वाक्यार्थकथनम । | ” | ७ |
| 'न हिंस्यात्-'इत्यादि-'अग्नीषोमीयं-'इत्यादिवाक्ययोः सामान्यविशेषभावात् सामान्यशास्त्रस्य विशेषेणाऽबाधात् वैधहिंसाया अनर्थहेतुत्वाभाव इत्याशङ्का। | ” | १७ |
| अत्र उभयोर्वाक्ययोर्भिन्नविषयकत्वेन न सामान्यविशेषभाव इति तदुत्तरदानम् । | ११ | १ |
| भिन्नविषयकत्वोपपादनम् । | ” | ४ |
| क्षयातिशययोः फलगतयोरप्युपाये उपचरितत्वकथनम् । | ” | ११ |

| विषयः | पृ. | पं. |
|---|---|---|
| स्वर्गस्य क्षयित्वसाधकप्रमाणकथनम्। | १२ | १ |
| स्वर्गस्य सातिशयत्वोपपादनम्। | " | २ |
| तस्य क्षयित्वाभावप्रतिपादकप्रागुदाहृतश्रुतिविरोधपरिहारः। | " | ५ |
| उक्तार्थस्य प्रामाणिकत्वसमर्थनाय प्रमाणोदाहरणम्। | " | ७ |
| 'तद्विपरीतः–'इत्यादिकारिकांशावतारणम्। | " | १६ |
| कारिकांशार्थकथनम्। | " | १७ |
| तत्त्वज्ञानसाध्यस्य शुद्धत्वनित्यनिरतिशयत्वसमर्थनम्। | " | १९ |
| तत्र प्रमाणकथनम्। | १३ | १ |
| फलस्याऽनुमानेनाऽनित्यत्वाशङ्का। | " | २ |
| उक्तानुमाने भावत्वरूपोपाध्युद्भावनमुखेन शङ्कासमाधानम्। | " | ३ |
| निरुक्तदुःखनिवृत्तेरात्यन्तिकत्वाभावशङ्का। | " | ४ |
| तन्निरासः। | " | " |
| कारिकायाः अक्षरार्थकथनम्। | " | ७ |
| तत्त्वज्ञानसाधनप्रतिपादकत्वेन 'व्यक्ताव्यक्तज्ञविज्ञानात्–'इतिकारिकांशावतारणम्। | " | १४ |
| व्यक्ताव्यक्तादीनां क्रमेणाऽभिधाने हेतुकथनम्। | " | १७ |
| सङ्क्षिप्य 'व्यक्त–'इत्यादिकारिकांशार्थकथनम्। | १४ | १ |

कारिका. ३.

| | | |
|---|---|---|
| तृतीयकारिकायाः शास्त्रविषयोद्देशवाक्यत्वकथनम्। | " | ८ |

| विषयः. | पृ. | पं. |
|---|---|---|
| सङ्क्षेपतः शास्त्रप्रतिपाद्यस्य चतुर्विधत्वकथनम्। | " | १५ |
| तत्र प्रकृतिशब्दार्थजिज्ञासया 'मूलप्रकृतिः—' इतिकारिकांशावतारणम्। | " | १८ |
| प्रकृतिशब्दार्थकथनम्। | " | १९ |
| तस्या अविकृतित्वप्रतिपादनम्। | " | २० |
| तत्र मूलत्वरूपहेतुकथनम्। | १५ | १ |
| 'प्रकृतिविकृतयः काः ? कियत्यश्च ?' इति शङ्कया "महदाद्याः–" इत्यादिकारिकांशावतारणम्। | " | ५ |
| प्रकृतिविकृतिशब्दार्थकथनम्। | " | ७ |
| तदुपपादनम्। | " | ८ |
| 'विकृतिः का ? कियती च ?' इति शङ्कया "षोडशकः–" इत्यादिकारिकांशावतारणम्। | " | १३ |
| 'षोडशक' शब्दार्थकथनम्। | " | १४ |
| षोडशकगणस्य विकारत्वेन विकृतिपदार्थत्वं चेत् प्रकृतिविकृतीनामपि तथात्वं स्यादित्याशङ्कानिरासाय 'तु' शब्दस्याऽवधारणार्थकत्वकथनम्। | " | १५ |
| अथैवं घटादीनामपि पृथिव्यादिविकारत्वेन विकृतित्वापत्त्या विकारस्य षोडशसङ्ख्यकत्वव्याघात इत्याशङ्क्य प्रकृते विकारशब्दस्य तत्त्वान्तरोपादानत्वरूपपारिभाषिकविकारत्वविशिष्टपरत्वकथनम्। | " | १७ |
| अनुभयरूपं किमिति जिज्ञासया 'न प्रकृतिः–' इत्यादिकारिकांशावतारणम्। | १७ | १ |

## कारिका. ४.


| विषयः | पृ. | पं. |
|---|---|---|
| शास्त्रप्रतिपाद्यार्थसाधने प्रमाणानामपेक्षिततया तेषां च प्रमाणसामान्यलक्षणं विना ज्ञातुमशक्यतया तदाहेति चतुर्थकारिकावतारणम् । | ,, | ४ |
| कारिकायां 'प्रमाणम्'इति पदस्य समाख्यया लक्ष्यपरत्वस्य, तन्निर्वचनस्य लक्षणतायाश्च प्रतिपादनम् । | १८ | ७ |
| तन्निर्वचनप्रकारप्रदर्शनम् । | १९ | १ |
| तद्घटकप्रमाशब्दार्थकथनम्, तत्करणत्वं प्रमाणत्वमितिलक्षणकथनं च । | ,, | २ |
| असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः प्रमेत्यादिलक्षणे असन्दिग्धेत्यादिविशेषणानां क्रमेण संशयविपर्ययस्मृतिकरणेष्वतिव्याप्तिवारकतया सार्थक्यकथनम् । | ,, | ४ |
| 'प्रमाणं कियत् ?'इतिजिज्ञासायां कारिकायां "त्रिविधम्"इत्युक्तमिति कथनम् । | २१ | २ |
| त्रिविधप्रमाणविभजनपरत्वेन 'दृष्टम्–'इत्यादिकारिकांशावतारणम् । | २२ | ४ |
| आर्षं विज्ञानं चतुर्थं किमिति नोक्तमित्याशङ्कायां न नाऽस्तीति कृत्वा नोक्तं, अपि तु लौकिकप्रमाणविभागस्यैव कारिकया क्रियमाणत्वेनाऽलौकिकतन्निरूपणस्याऽप्रकृतत्वादेवेति समाधानम् । | ,, | ५ |

| विषयः. | पृ. | पं. |
|---|---|---|
| 'मा भून्निविधान्न्यूनम्, अधिकं तु उपमानादिकं प्रमाणं कुतो न भवति ?' इत्याशङ्कया "सर्वप्रमाणसिद्धत्वात्" इतिकारिकांशावतारणम् । | " | १० |
| "सर्वप्रमाणसिद्धत्वात्" इत्यंशस्यार्थकथनम् । | " | १२ |
| 'प्रमेयप्रतिपादकं शास्त्रं किमिति प्रमाणं निरूपयति ?' इत्याशङ्कया "प्रमेयसिद्धिः प्रमाणाद्धि"-इतिकारिकांशावतारणम् । | २३ | ३ |
| इयमार्या पाठक्रमानुरोधेन कुतो न व्याख्यातेत्याशङ्काया निरासः । | " | ६ |

## कारिका. ५.

| विषयः. | पृ. | पं. |
|---|---|---|
| 'प्रमाणसामान्ये लक्षिते प्रमाणविशेषाणां लक्षणीयतयाऽऽदौ प्रत्यक्षस्य सर्वप्रमाणेषु ज्येष्ठत्वात्तल्लक्षयति—"प्रतिविषयाध्यवसायो दृष्टम्" इत्यंशेन' इति कथनम् । | " | ९ |
| उक्तकारिकांशे पदद्वयस्य लक्ष्यलक्षणवाचकत्वोक्तिः। | २४ | ४ |
| 'प्रतिविषयाध्यवसायः' इत्यंशस्याऽवयवार्थकथनम्। | " | ७ |
| निष्कृष्टप्रत्यक्षलक्षणकथनम् । | २५ | २ |
| प्रत्यक्षप्रमालक्षणकथनम् । | " | ५ |
| बुद्धिवृत्त्या चेतनानुग्रहनिरूपणम् । | " | ७ |
| प्रत्यक्षप्रमाणलक्षणे 'अध्यवसाय' पदं संशयवारकम्, विपर्ययवारणाय 'विपर्यय' पदम्, 'प्रति' पदमनुमानादिव्यावर्तकमिति कथनम् । | २६ | ६ |

| विषयः. | पृ. | पं. |
|---|---|---|
| प्रतिविषयाध्यवसाय इत्यस्य लक्षणत्वे प्रमाणकथनम्. | " | ११ |
| अनुमानस्य प्रामाण्यसाधनम्। | २७ | २ |
| प्रत्यक्षकार्यत्वादनुमानस्य प्रत्यक्षानन्तरं निरूपणीयत्वमुक्त्वाऽनुमानलक्षणावतारणम्। | २८ | ३ |
| "लिङ्गलिङ्गिपूर्वकम्" इतिकारिकांशस्याऽर्थनिरूपणम्। | " | ६ |
| "व्याप्य' शब्दार्थनिरूपणम्। | २९ | १ |
| 'व्यापक' शब्दार्थनिरूपणम्। | " | २ |
| अनुमानसामान्यस्य निष्कृष्टलक्षणाभिधानम्। | " | ७ |
| तन्त्रान्तरोक्तरीत्याऽनुमानं विभजत इति "त्रिविधम्–" इत्यादिकारिकांशावतारणम्। | " | १० |
| कारिकांशव्याख्यानावसरे प्रथमतोऽनुमानस्य वीतावीतभेदेन द्वैविध्यकथनम्। | ३० | ४ |
| वीतावीतयोर्लक्षणकथनम्। | " | " |
| अवीतस्य तन्त्रान्तरोक्तशेषवद्रूपत्वकथनम्। | " | ७ |
| शेषवच्छब्दार्थकथनम्। | " | " |
| अत्र विषये न्यायभाष्यकृत्संमतिप्रदर्शनम्। | " | ९ |
| वीतविभागः। | ३१ | ३ |
| पूर्ववतो लक्षणम्। | " | " |
| तदुदाहरणप्रदर्शनम्। | ३२ | १ |
| वीतलक्षणकथनम्। | " | ४ |
| तदुदाहरणप्रदर्शनम्। | " | ९ |
| सामान्यतोदृष्टशब्दार्थकथनम्। | ३३ | ३ |

| विषयः. | पृ. | पं. |
|---|---|---|
| 'शब्दस्याऽनुमानपूर्वकत्वेनाऽनुमानानन्तरं तन्निरूपयति "आप्तश्रुतिः" इति' इति कथनम्। | " | ९ |
| 'आप्तश्रुतिः' इत्यादिकारिकांशे लक्ष्यवाक्यलक्षणवाक्यविवेकः। | ३५ | ३ |
| निष्कृष्टशब्दप्रमाणलक्षणकथनम्। | " | ६ |
| शब्दस्य स्वतःप्रामाण्योपपादनम्। | " | ७ |
| वेदमूलस्मृत्यादीनामपि प्रामाण्यातिदेशः। | ३६ | १ |
| कपिलप्रणीतस्य शास्त्रस्य वेदमूलकत्वव्यवस्थापनम्। | " | ४ |
| शाक्याद्यागमप्रामाण्यप्रतिषेधः, तत्र हेतुश्च। | " | १० |
| कारिकास्थ 'तु' शब्दस्याऽनुमानाद्यवच्छेदकत्वकथनम्। | ३७ | ४ |
| शब्दस्याऽनुमानातिरिक्तत्वसमर्थनम्। | " | " |
| इतरप्रमाणानामुक्तेष्वन्तर्भावप्रतिज्ञा। | ३८ | ५ |
| तत्र प्रथमं 'यथा गौस्तथा गवयः' इति वाक्यस्योपमानत्वे शब्देऽन्तर्भावकथनम्। | ३९ | २ |
| गवयशब्दो गोसदृशस्य वाचक इत्यनुभवस्य तथात्वे तस्याऽनुमित्यन्तर्भावकथनम्। | " | ३ |
| गवये गोसादृश्यज्ञानस्य तथात्वे तस्य प्रत्यक्षेऽन्तर्भावकथनम्। | ४० | ४ |
| स्मर्यमाणायां गवि गोसादृश्यज्ञानस्याऽपि प्रत्यक्षेऽन्तर्भावेण तथात्वनिरासः। | ४१ | २ |
| अर्थापत्तेः प्रमाणान्तरत्वाभावप्रतिज्ञा। | ४३ | २ |
| अर्थापत्तेरनुमानेऽन्तर्भावकथनम्। | " | ४ |

| विषयः. | पृ. | पं. |
|---|---|---|
| विरुद्धयोः प्रमाणयोरविरोधोपपादनमर्थापत्तिविषय इति शङ्काया निरासः । | ४५ | १० |
| अनुपलब्धिप्रामाण्यनिरासः । | ४६ | ५ |
| तदुपपादनम् । | " | " |
| सम्भवप्रामाण्यखण्डनम् । | ४८ | १ |
| ऐतिह्यप्रामाण्यखण्डनम् । | " | ४ |
| प्रमाणत्रैविध्योपसंहारः । | " | ८ |

---

## कारिका. ६.

| | | |
|---|---|---|
| लक्षितेषु प्रमाणेषु यत प्रमाणं यत्रोपयुज्यते तद्दर्शयतीति षष्ठकारिकावतारणम् । | " | १० |
| "सामान्यतस्तु दृष्टात्–"इति कारिकायां 'तु'शब्दस्य प्रत्यक्षपूर्ववद्व्यवच्छेदकत्वकथनम् । | ४९ | १ |
| सामान्यतोदृष्टस्य शेषवल्लक्षकत्वकथनम् । | " | ४ |
| सर्वत्र सामान्यतोदृष्टस्यैव प्रमाणत्वे स्वर्गादीनां तदविषयतयाऽप्रामाणिकत्वापत्तिरित्याशङ्क्या "तस्मादपि–"इत्यादिकारिकांशावतारणम् । | " | ६ |
| "तस्मादपि च–"इत्यत्र 'च'कारस्य शेषवत्समुच्चायकत्वकथनम् । | " | ९ |

---

## कारिका. ७.


| विषयः. | पृ. | पं. |
|---|---|---|
| ननु प्रत्यक्षेणाऽनुपलब्ध्या यथा शशशृङ्गादीनामभावः सिद्ध्यति, तथा महदहङ्कारादीनामपि तत्सिद्ध्या कथं सामान्यतोदृष्टात्तत्सिद्धिर्भवेदित्याशङ्क्य नाऽसत्त्वेन कारणेन तेषामप्रत्यक्षं, अपि तु प्रत्यक्षप्रतिबन्धकाद्दोषादेवेति निरूपयितुं प्रथमतः प्रत्यक्षप्रतिबन्धकदोषान् निरूपयतीति सप्तमकारिकावतारणम्। | " | १२ |
| अत्र कारिकायामग्रिमकारिकास्थं 'अनुपलब्धिः'-इति पदं सिंहावलोकनन्यायेनाऽनुषञ्जनीयमिति कथनम्। | ५० | ७ |
| दूरत्वदोषस्य प्रतिबन्धकत्वे उदाहरणम्। | " | ८ |
| "सामीप्यात्" इत्यत्राऽपि 'अपिः' अनुवर्तनीय इति कथनम्। | " | १० |
| अत्रोदाहरणम्। | " | " |
| इन्द्रियघातस्य दोषत्वकथनम्। | " | ११ |
| मनोऽनवस्थानस्य दोषत्वकथनम्। | " | १२ |
| अत्रोदाहरणम्। | " | " |
| सौक्ष्म्यस्य तथात्वकथनम्। | " | १४ |
| अत्रोदाहरणम्। | " | " |
| व्यवधानस्य तथात्वकथनम्। | ५१ | १ |
| अत्रोदाहरणम्। | " | " |
| अभिभवस्य तथात्वकथनम्। | " | २ |
| अत्रोदाहरणम्। | " | " |

| विषयः. | पृ. | पं. |
|---|---|---|
| समानाभिहारस्य तथात्वकथनम् । | ,, | ३ |
| अत्रोदाहरणम् । | ,, | ४ |
| 'च'कारेणाऽभिभवस्य समुच्चयकथनम् । | ,, | ६ |
| अत्रोदाहरणम् । | ,, | ७ |
| सप्तमकारिकार्थोपसंहारः, न प्रत्यक्षानिवृत्तिमात्रेणाऽभावो निश्चेतुं शक्यः, अपि तु योग्यानुपलब्ध्येति प्रधानप्रभृतीनामयोग्यतया न तदनुपलब्धिरभावं साधयितुमलमिति कथनं च । | ,, | ९ |

## कारिका. ८.

| | | |
|---|---|---|
| प्रधानादीनामनुपलब्धिप्रयोजकं किमिति जिज्ञासयाऽष्टमकारिकावतारणम् । | ९९ | ३ |
| अभावादेव प्रधानाद्यनुपलम्भः किमिति न स्यादितिशङ्कानिराकरणम् । | ,, | ९ |
| "कार्यतस्तदुपलब्धेः"इतिकारिकांशे "तत्"पदेन प्रधानस्यैव परामर्शः, न तु पुरुषस्य, तथा सति पुरुषस्य कारणत्वेनैव साधनीयतयाऽपसिद्धान्तादिति कथनं, तर्हि पुरुषसद्भावे किं प्रमाणमित्याशङ्कायां "सङ्घातपरार्थत्वात्–"(१७)इत्यादिकारिकायास्तत्प्रदर्शकत्वकथनं च । | ,, | १२ |
| एवं च प्रधानादीनां प्रमाणसिद्धतया तदप्रत्यक्षप्रयोजकतया दोषः कल्पनीयः, सप्तमरसादेस्त्वप्रामाणिकत्वेन न तत्प्रत्यक्षमिति न तद- | | |

| विषयः | पृ. | पं. |
|---|---|---|
| प्रत्यक्षप्रयोजको दोष इति कथनेन कारिकार्थोपसंहारः। | " | १४ |
| किं पुनस्तत्कार्यं यत्प्रधानादिगमकमित्याशङ्क्य "महदादि तच्च कार्यं" इत्यादिकारिकातृतीयपादावतारणम्। | ५३ | १ |
| कार्यगतविवेकज्ञानोपयोगिसारूप्यवैरूप्ये निरूपयतीति चतुर्थपादावतारणम्। | " | ४ |


----

## कारिका. ९.


| विषयः | पृ. | पं. |
|---|---|---|
| नवमकारिकावतारणाय भूमिका। | " | ८ |
| तत्र तावत् शून्यजगदुपादानत्ववादिमतनिरूपणम्। | " | ९ |
| विवर्तवादनिरूपणम्। | " | १० |
| असत्कार्यवादनिरूपणम्। | ५४ | १ |
| सत्कार्यवादनिरूपणम्। | " | २ |
| किमनेन निरूपणेनेत्याशङ्क्य पूर्वस्मिन् कल्पत्रये प्रधानं न सिद्ध्यतीति कथनेन प्रधानसिद्ध्यनुकूलतया सत्कार्यसाधनमित्यभिप्रायविवरणम्। | " | ३ |
| शून्यवादे प्रधानासिद्धिनिरूपणम्। | ५६ | ३ |
| विवर्तवादे तदसिद्धिकथनम्। | " | ६ |
| असत्कार्यवादे तदसिद्धिनिरूपणम्। | ५७ | ४ |
| अतः प्रधानसाधनाय सत्कार्यमाह—"असत्-" इत्यादीत्युक्त्वा नवमकारिकावतारणम्। | " | ७ |

| विषयः. | पृ. | पं. |
|---|---|---|
| "सत् कार्यम्"इत्यत्र 'कारणव्यापारात् प्रागपि-' इतिशेषकथनेन नैयायिकोद्भावितस्य सिद्धसाधनस्य वारणम्। | ५८ | ६ |
| तत्र प्रथमतः शून्यवादखण्डनम्। | ५९ | १ |
| विवर्तवादखण्डनम्। | ६० | १ |
| परिशिष्टस्य नैयायिकमतस्य खण्डनाय "सत् कार्यम्"इति प्रतिज्ञातमिति कथनम्। | " | ३ |
| तत्र हेतुमाह-"असदकरणात्"इतीति कारिकांशावतारणम्। | " | " |
| तद्व्याख्यानम्। | " | ४ |
| एवमसत्त्वस्य कार्यस्वरूपत्वं निरस्य कार्यधर्मत्वस्याऽपि खण्डनम्। | ६१ | ३ |
| न स्वरूपं, न वा धर्मोऽसत्त्वं, किन्त्वर्थान्तरमेवेत्याशङ्कानिरासः। | " | ५ |
| सतोऽभिव्यक्त्युपपादनम्। | " | ८ |
| असतः करणे दृष्टान्ताभावकथनम्। | " | ११ |
| "उपादानग्रहणात्"इतिहेत्वन्तरावतारणम्। | ६२ | १ |
| तदर्थकथनम्। | " | २ |
| तदुपपादनम्। | " | ५ |
| असम्बद्धस्योत्पत्तिनिरासैदम्पर्येण "सर्वसम्भवाभावात्"इतिकारिकांशावतारणम्। | " | ८ |
| तदुपपादनम्। | ६३ | २ |
| कार्यकारणयोरसम्बन्धेऽपि कारणे कार्यानुकूला शक्तिः कार्योत्पत्तिनियामिकेतिशङ्कानिरासाय "श- | | |

| विषयः. | पृ. | पं. |
|---|---|---|
| क्तस्य शक्यकरणात्''इतिकारिकांशावतारणम् । | ६३ | ८ |
| तदुपपादनम् । | " | ११ |
| "कारणभावाच्च"इतिहेत्वन्तरावतारणम् । | ६४ | ३ |
| तदुपपादनम् । | " | " |
| कार्यकारणयोरभेदानुमानाकाराः । | ६४ | ७ |
| स्वात्मनि क्रियानिरोधादीनां भेदसाधकत्वखण्डनम् । | ६६ | ४ |
| कार्यस्य कारणाभेदवादिमते 'इह तन्तुषु पटः' इतिव्यवहारोपपादनम् । | ६७ | १५ |
| अर्थक्रियाभेदस्य भेदसाधकत्वाशङ्का । | " | १७ |
| सत्कार्यवादिमते आविर्भावस्य सत्त्वासत्त्वविकल्पकरणमुखेन दोषाशङ्का । | ६८ | ८ |
| प्रतिबन्द्या तदुत्तरकथनम् । | " | १४ |
| उत्पत्तेः कार्यरूपत्वे दोषमभिधाय तयाऽपि सत्कार्यसाधनम् । | " | १६ |
| कार्यरूपेण कारणान्तरसम्बन्धनिराकरणम् । | ६९ | ७ |
| सत्कार्योपसंहारः । | " | १० |


---

## कारिका. १०.


| | | |
|---|---|---|
| प्रधानस्वरूपप्रदर्शनोपयोगिनी विवेकज्ञानोपयोगिनी व्यक्ताव्यक्तसारूप्यवैरूप्ये निरूपयतीति दशमकारिकावतारणम् । | " | १२ |
| "हेतुमत्"इत्यंशस्य व्याख्यानम् । | ७० | १ |
| "अनित्यम्"इत्यंशस्य व्याख्यानम् । | " | ३ |

| विषयः. | पृ. | पं. |
|---|---|---|
| "अव्यापि"इत्यंशस्य व्याख्यानम् । | ,, | ४ |
| "सक्रियम"इत्यस्य व्याख्यानम् । | ,, | ४ |
| "अनेकम्" इत्यस्य व्याख्यानम् । | ,, | ११ |
| "आश्रितम्"इत्यस्य व्याख्यानम् । | ७१ | १ |
| "लिङ्गम्"इत्यस्य व्याख्यानम् । | ,, | ४ |
| "सावयवं"इत्यस्य व्याख्यानं, तदुपपादनं च । | ,, | ७ |
| "परतन्त्रम"इत्यस्य व्याख्यानं, तदुपपादनं च । | ,, | १५ |
| अव्यक्तस्वरूपकथनम् । | ७२ | २ |


---

## कारिका. ११.


| विषयः. | पृ. | पं. |
|---|---|---|
| सम्प्रति व्यक्ताव्यक्तयोः साधर्म्यं पुरुषाच्च वैधर्म्य-माहेत्येकादशकारिकावतारणम् । | ,, | ८ |
| "त्रिगुणम्"इत्यस्य व्याख्यानम् । | ,, | १४ |
| "अविवेकि"पदार्थकथनम् । | ७३ | १ |
| विज्ञानवादनिरासैदम्पर्येण "विषयः"इत्यस्याऽवतारणम् । | | |
| तदर्थकथनम् । | ,, | ७ |
| "साधारणम्"इत्यस्याऽपि तत्रैव हेतुत्वकथनम् । | ,, | ९ |
| तदर्थकथनप्रकृतोपपादने । | ,, | ११ |
| "अचेतनम्"इत्यस्य व्याख्यानम । | ,, | ,, |
| "प्रसवधर्मि"इत्यस्य व्याख्यानम् । | ७४ | ६ |
| व्यक्तधर्माणामव्यक्तेऽतिदेशकतया "तथा प्रधानम्"इत्यस्य व्याख्यानम् । | ,, | ८ |
| | ,, | १२ |

| विषयः | पृ. | पं. |
|---|---|---|
| तयोर्वैधर्म्यं पुरुषस्याऽऽहेति "तद्विपरीतः-"-इत्यादिकारिकांशमवतार्य तद्व्याख्यानम् । | ७५ | १ |
| पुरुषस्याऽप्यहेतुमत्त्वानेकत्वादिना व्यक्ताव्यक्त-साधर्म्यात्कथं वैधर्म्यमित्याशङ्क्य "च"कारस्य वैधर्म्यसमुच्चायकत्वकथनम् । | " | ३ |

## कारिका. १२.

| विषयः | पृ. | पं. |
|---|---|---|
| "त्रिगुणम्"इति प्रागुक्तं, के ते त्रयो गुणाः ? किञ्च तल्लक्षणमिति जिज्ञासया कारिकावतारणम् । | " | ११ |
| "गुण"शब्दार्थकथनम् । | " | १७ |
| "सत्त्वं लघु प्रकाशकम्-"इत्यादिकारिकोक्ताः सत्त्वादयः क्रमेण कारिकायां योजनीया इति युक्तिपुरस्कारेण कथनम् । | " | " |
| "प्रीत्यप्रीतिविषादात्मकाः"इत्यस्याऽर्थकथनम् । | ७६ | २ |
| "आत्म"ग्रहणस्य सुखादिसत्तासूचकत्वकथनम् । | " | ५ |
| तदुपपादनम् । | " | ८ |
| गुणत्रयस्य प्रयोजनकथनपरत्वेन कारिका-तृतीयपादावतारणम् । | ७७ | २ |
| क्रियामाहेत्यवशिष्टांशावतारणम् । | " | ७ |
| तद्व्याख्यानम् । | " | ८ |
| अत्र प्रमाणत्वेन देवीभागवतोदाहरणम् । | ७९ | १ |

## कारिका. १३.

"प्रकाशप्रवृत्तिनियमार्थाः"इत्यत्र कः प्रकाश-

| विषयः. | पृ. | पं. |
| --- | --- | --- |
| कः ? कौ वा प्रवर्तकनियामकाविति जिज्ञासया कारिकावतारणम्। | " | ८ |
| कारिकाव्याख्यानम्, सत्त्वस्वरूपकार्यादिनिरूपणम्। | " | १४ |
| लाघवपदार्थकथनम्। | " | १५ |
| रजःस्वरूपकार्यादिनिरूपणम्। | ८० | १ |
| तमःस्वरूपादिनिरूपणम्। | " | ६ |
| ननु परस्परविरुद्धा एते किमिति न परस्परमुपहन्यन्ते सुन्दोपसुन्दवदिति शङ्कयाऽवशिष्टकारिकांशावतारणतद्व्याख्याने। | " | १२ |
| तदुपपादनम्। | " | १५ |
| सुखदुःखमोहानां परस्परभिन्नत्वव्यवस्थापनम्। | ८१ | ५ |
| अत्र दृष्टान्तः। | " | ९ |
| कारिकार्थोपसंहारः। | ८२ | १ |
| सुखप्रकाशलाघवादीनामेकत्वव्यवस्थापनम्। | " | ३ |


---

## कारिका. १४.


| विषयः. | पृ. | पं. |
| --- | --- | --- |
| 'पृथिव्यादिषु प्रत्यक्षगोचरेषु भवन्त्वविवेकित्वादयः, प्रत्यक्षागोचरेषु प्रधानादिषु तु कुतः ?'इति जिज्ञासया कारिकावतारः। | " | १० |
| कारिकास्थ'अविवेकि'पदस्य अविवेकित्वार्थकत्वकथनं, तत्र युक्तिप्रदर्शनं च। | ८३ | ५ |
| 'अविवेक्यादेः कुतःसिद्धिः ?'इत्याशङ्कया "त्रैगुण्यात्"इत्यंशावतारः, तद्व्याख्यानं, तस्याऽन्वयिहेतुप्रदर्शकत्वकथनं च। | " | ८ |

| विषयः. | पृ. | पं. |
|---|---|---|
| अत्रैव व्यतिरेकिहेतुप्रदर्शनपरत्वेन "तद्विपर्ययाभावात्" इत्यंशावतारणम् । | " | १२ |
| "त्रैगुण्यात्तद्विपर्ययाभावात्" इत्यंशस्याऽवीतत्वोपगमेन वा ग्रन्थसङ्गमनम् । | " | १४ |
| 'अव्यक्तसिद्धौ खलु तत्राऽविवेकित्वादयः सिध्येयुः, तदेव तु कुतः सिध्यति ?' इत्याशङ्कया "कारणगुणात्मकत्वात्" इत्यादिकारिकावशिष्टभागावतारः । | " | १६ |
| तद्व्याख्यानम् । | ८४ | ३ |


---

## कारिका. १५–१६.


| विषयः. | पृ. | पं. |
|---|---|---|
| व्यक्तेभ्यः परमाणुभ्यो जगदुत्पत्स्यत इत्यव्यक्ते प्रमाणाभाव इति शङ्कया कारिकावतारः । | " | ८ |
| "भेदानां" इत्यस्य व्याख्या । | ८५ | ५ |
| पर्यवसन्नप्रतिज्ञावाक्यप्रदर्शनम् । | " | ६ |
| अत्र हेतुविवक्षया 'कारणकार्य–' इत्याद्यवतारणं, तद्व्याख्यानं च । | " | ७ |
| कारणकार्यविभागनिरूपणम् । | " | ८ |
| वैश्वरूप्यस्याऽविभागनिरूपणम् । | ८६ | ६ |
| प्रतिज्ञातार्थस्य निगमनम् । | ८७ | २ |
| हेत्वन्तरप्रदर्शनपरत्वेन 'शक्तितः प्रवृत्तेश्च' इत्यंशावतारणम् । | " | ४ |
| तद्व्याख्यानम् । | " | ५ |

| विषयः | पृ. | पं. |
|---|---|---|
| उक्तौ द्वावपि हेतू महान्तमेव साधयिष्यतः, न त्वव्यक्तमिति शङ्कयाऽव्यक्तसाधकहेत्वन्तरप्रदर्शनपरत्वेन 'परिमाणात्' इत्यंशावतारणं, तदर्थश्च। | " | १२ |
| पर्यवसितानुमानस्वरूपनिरूपणम्। | " | १४ |
| 'हेत्वन्तरमाह–"समन्वयात्" इति' इति, कथनम्। | ८८ | २ |
| तद्व्याख्यानम्। | " | ३ |
| अव्यक्तं साधयित्वा तत्प्रवृत्तिप्रकारप्रदर्शकतया 'प्रवर्तते त्रिगुणतः' इत्यंशावतारणम्। | ८९ | १ |
| तद्व्याख्यानम्। | | २ |
| 'प्रवृत्त्यन्तरमाह–"समुदयाच्च" इति' इति कथनम्। | " | ८ |
| कथमेकरूपाणामनेकरूपा प्रवृत्तिरिति शङ्कया 'परिणामतः सलिलवत्' इत्यंशावतारणम्, तदर्थनिरूपणं च। | " | १३ |


---

## कारिका. १७.


| विषयः | पृ. | पं. |
|---|---|---|
| प्रधानाद्यतिरिक्तपुरुषसाधनपरतया कारिकावतारणम्। | | |
| प्रतिज्ञावाक्यप्रदर्शनम्। | ९० | ७ |
| तत्र हेतुवाक्यतया 'सङ्घातपरार्थत्वात्' इत्यंशावतारणम्, तदर्थकथनं च। | " | १३ |
| अनेन हेतुना सङ्घातान्तरसिद्धावपि न तस्य सङ्घातातिरिक्तत्वसिद्धिरिति शङ्कया 'त्रिगुणादिविपर्ययात्' इतिहेत्वन्तरावतारणम्। | " | ४ |
| | ९१ | ४ |

| विषयः. | पृ. | पं. |
|---|---|---|
| तदर्थनिरूपणम्। | " | ९ |
| हेत्वन्तरत्वेन 'अधिष्ठानात्' इत्यंशावतारणम्। | ९२ | १० |
| तदर्थनिरूपणम्। | " | " |
| हेत्वन्तरत्वेन 'भोक्तृभावात्' इत्यंशावतारणम्। | ९३ | २ |
| तदर्थनिरूपणम्। | " | " |
| प्रकारान्तरेण तदर्थनिरूपणम्। | " | १० |
| हेत्वन्तरत्वेन 'कैवल्यार्थं प्रवृत्तेश्च' इत्यंशावतारणम्। | " | १६ |
| तदर्थनिरूपणम्। | " | १७ |

## कारिका. १७.

| | | |
|---|---|---|
| पुरुषनानात्वसाधनपरत्वेन कारिकावतारणम्। | ९४ | ६ |
| कारिकाव्याख्यानम्। | " | १३ |

## कारिका. १९.

| | | |
|---|---|---|
| साक्षित्वादिपुरुषधर्मप्रतिपादकतया कारिकावतारणम्, तद्व्याख्यानं च। | ९६ | १७ |

## कारिका. २०.

| | | |
|---|---|---|
| कृतिचैतन्ययोः सामानाधिकरण्यप्रतीतिः साङ्ख्यमते कथमुपपद्यत इति शङ्कया कारिकावतारणम्। | ९८ | ११ |
| कारिकार्थनिरूपणम्। | " | १९ |

## कारिका. २१.


| विषयः. | पृ, | पं. |
|---|---|---|
| उपकार्योपकारकभावं विना कथं प्रकृतिपुरुषयोः संयोग इति शङ्कया कारिकावतारणम्। | ९९ | ५ |
| कारिकार्थनिरूपणम्, तयोः संयोगोपपादनं च। | ” | १२ |
| महदादीनां तत्संयोगजन्यत्वप्रदर्शकतया 'तत्कृतः सर्गः'इत्यंशावतारणं, तदर्थनिरूपणं च। | १०० | ५ |


## कारिका. २२.


| | | |
|---|---|---|
| सर्गक्रमनिरूपणपरतया कारिकावतारणम्। | ” | १० |
| कारिकार्थनिरूपणम्। | ” | १५ |


## कारिका. २३.


| | | |
|---|---|---|
| व्यक्तविशेषबुद्धिनिरूपणपरतया कारिकावतारणम्। | १०१ | ९ |
| कारिकाप्रथमभागस्य बुद्धिलक्षकतया व्याख्यानं, निष्कृष्टतल्लक्षणप्रदर्शनं,तस्य लक्षणत्वोपपादनं च। | ” | १८ |
| सात्त्विकतामसबुद्धिधर्मप्रतिपादकतया 'धर्मः-' इत्याद्यंशावतारणम्। | १०२ | ६ |
| धर्मपदार्थनिरूपणम्। | ” | ९ |
| अभ्युदयहेतुधर्मकथनम्। | ” | ” |
| निःश्रेयसहेतुधर्मनिरूपणम्। | ” | १० |
| ज्ञानपदार्थनिरूपणम्। | ” | ११ |
| वैराग्यपदार्थनिरूपणम्। | ” | १२ |

| विषयः | पृ. | पं. |
|---|---|---|
| वैराग्यविभागः। | ” | १३ |
| यतमानसंज्ञावैराग्यनिरूपणम्। | ” | १४ |
| व्यतिरेकसंज्ञावैराग्यनिरूपणम्। | १०३ | ३ |
| एकेन्द्रियसंज्ञावैराग्यनिरूपणम्। | ” | ७ |
| वशीकारसंज्ञावैराग्यनिरूपणम्। | ” | ९ |
| ऐश्वर्यनिरूपणम्। | ” | १५ |
| अणिमस्वरूपम्। | ” | १६ |
| लघिमस्वरूपम्। | ” | १७ |
| गरिमस्वरूपम्। | ” | १९ |
| महिमस्वरूपम्। | १०४ | १ |
| प्राप्तिस्वरूपम्। | ” | २ |
| प्राकाम्यस्वरूपम्। | ” | ३ |
| वशित्वस्वरूपम्। | ” | ५ |
| ईशित्वस्वरूपम्। | ” | ६ |
| कामावसायित्वस्य सत्यसङ्कल्पताथामन्तर्भावकथनम्। | ” | ७ |
| तामसबुद्धिधर्मनिरूपणम्। | ” | १२ |

## कारिका. २४.

| विषयः | पृ. | पं. |
|---|---|---|
| अहङ्कारलक्षणप्रदर्शकतया कारिकावतारणम्। | ” | १५ |
| कारिकार्थनिरूपणम्। | १५० | ३ |
| अहङ्कारकार्यद्वयप्रतिपादकतया 'तस्मात् द्विविधः प्रवर्तते सर्गः' इतिकारिकांशव्याख्यानम्। | ” | १० |

## कारिका. २५.

| विषयः. | पृ. | पं. |
| --- | --- | --- |
| एकरूपादहङ्कारादुभयविधः सर्गः कथमिति शङ्कया कारिकावतारणम्। | ” | १६ |
| कारिकार्थनिरूपणम्। | १०६ | २ |

## कारिका. २६.

| विषयः. | पृ. | पं. |
| --- | --- | --- |
| सात्त्विकैकादशकनिरूपणोपयोगितया बाह्यदशकप्रतिपादिकेयं कारिकेति कारिकावतारणम्। | ” | १९ |
| कारिकार्थनिरूपणम्। | १०७ | ५ |

## कारिका. २७.

| विषयः. | पृ. | पं. |
| --- | --- | --- |
| एकादशेन्द्रियनिरूपणपरतया कारिकावतारणम्। | ” | १४ |
| ‘उभयात्मकम्’इत्यस्य व्याख्यानम्। | ” | १९ |
| मनोलक्षणपरतया ‘सङ्कल्पकं’इत्यंशस्य व्याख्यानं, तदुपपादनं च। | १०८ | ३ |
| असाधारणव्यापारयोगित्वान्मनः कथमिन्द्रियमित्याशङ्कया ‘इन्द्रियं च’इत्युक्तमिति कथनं, तदंशव्याख्यानं च। | १०७ | ६ |
| अत्र हेतुवाक्यत्वेन ‘साधर्म्यात्’इत्यस्याऽवतारणं, तदर्थकथनं च। | ” | ९ |
| एकस्मादहङ्कारात्कथमेकादशेन्द्रियाणि ?’इति शङ्कया ‘गुणपरिणाम–’इत्याद्यंशावतारणं, तद्व्याख्यानं च। | ” | १४ |

## कारिका. २८.


| विषयः. | पृ. | पं. |
|---|---|---|
| दशेन्द्रियकार्यप्रदर्शकतया कारिकावतारणम् । | ११० | ४ |
| कारिकार्थकथनम् । | " | १० |


---

## कारिका. २९.


| | | |
|---|---|---|
| अन्तःकरणत्रयवृत्तिप्रदर्शनपरत्वेन कारिकावतारणम् । | " | १६ |
| "स्वालक्षण्यं वृत्तिस्त्रयस्य" इत्यंशस्य व्याख्यानम् । | १११ | ४ |
| साधारणासाधारणस्वरूपवृत्तिद्वैविध्यमाहेति परिशिष्टकारिकांशावतारणं, तदर्थोपपादनं च । | " | ९ |


---

## कारिका. ३०.


| | | |
|---|---|---|
| त्रिविधकरणस्य वृत्तिः क्रमेण यौगपद्येन वा भवतीति जिज्ञासया कारिकावतारणम् । | ११२ | १ |
| क्रमयौगपद्यनिरूपणं सोदाहरणम् । | " | ७ |
| 'परोक्षस्थले करणत्रयस्य वृत्तिरित्याह "अदृष्टे"-इत्यादि' इति कथनं, तावदंशव्याख्यानं च । | ११३ | १ |


---

## कारिका. ३१.


| | | |
|---|---|---|
| 'करणानां प्रवृत्तिर्नियमश्च स्वकार्येषु कुतः ?' इति जिज्ञासया कारिकावतारणम्, कारिकार्थव्याख्यानं, तदुपपादनं च । | " | ७ |


---

## कारिका. ३२.


| विषयः. | पृ. | पं. |
|---|---|---|
| करणविभागपरतया कारिकावतारणम्। | ११४ | २० |
| कारिकार्थव्याख्यानं, तदुपपादनं च। | ११५ | ६ |


## कारिका. ३३.


| | | |
|---|---|---|
| त्रयोदशविधकरणानामवान्तरविभागपरतया कारिकावतारणम्। | ११६ | ११ |
| विभागोपपादनम्। | ,, | १६ |
| बाह्यान्तरयोर्विशेषप्रदर्शकतयाऽवशिष्टांशव्याख्यानम्। | ११७ | ४ |
| प्रसङ्गाद्वैशेषिकाभिमतकालरूपतत्त्वान्तरखण्डनम्। | ,, | १२ |


## कारिका. ३४.


| | | |
|---|---|---|
| बाह्येन्द्रियविषयप्रदर्शकतया कारिकावतारणं, तदर्थनिरूपणं च। | ११८ | ५ |


## कारिका. ३५.


| | | |
|---|---|---|
| उक्तेषु करणेषु कस्य प्राधान्यमप्राधान्यं चेति शङ्कया कारिकावतारणम्। | ११९ | ९ |
| कारिकार्थनिरूपणम्। | १२० | ३ |


## कारिका. ३६.


| | | |
|---|---|---|
| बुद्धेः सर्वापेक्षया प्राधान्यप्रदर्शकतया कारिकावतारणम्। | ,, | ८ |

| विषयः. | पृ. | पं. |
|---|---|---|
| कारिकार्थनिरूपणम्। | ,, | १५ |

## कारिका. ३७.

| | | |
|---|---|---|
| कस्माद्विषयान् करणानि बुद्धौ प्रयच्छन्ति, न बुद्धिरन्येभ्य इति शङ्कया कारिकावतारणम्। | १२१ | ९ |
| कारिकार्थनिरूपणम्। | ,, | १५ |
| बुद्धेरेव पुरुषस्य भोगजनकत्वेऽनिर्मोक्ष इतिशङ्का-निरासकतया 'सैव च-'इत्याद्यंशव्याख्यानम्। | १२२ | ८ |

## कारिका. ३८.

| | | |
|---|---|---|
| विशेषाविशेषविभाजकतया कारिकावतारणम्। | १२३ | १० |
| कारिकार्थनिरूपणं, तदुपपादनं च। | ,, | १५ |

## कारिका. ३९.

| | | |
|---|---|---|
| विशेषाणामवान्तरविशेषप्रदर्शकतया कारिकावतारणम्। | १२४ | १६ |
| कारिकार्थनिरूपणम्। | १२५ | १ |

## कारिका. ४०.

| | | |
|---|---|---|
| सूक्ष्मशरीरनिरूपणपरतया कारिकावतारणम्। | ,, | १४ |
| प्रथमतः स्वरूपकथनम्। | ,, | २० |
| षाट्कौशिकशरीरसाधनम्। | १२६ | ७ |
| सूक्ष्मशरीरस्य धर्माधर्मराहित्येऽपि संसारोपपादनम्। | ,, | १३ |

विषयः. पृ. पं.
तस्याऽनित्यत्वकथनम् । ,, २०

कारिका. ४१.
सूक्ष्मशरीरे प्रमाणप्रदर्शकतया कारिकावतारणं, तदर्थकथनं, तत्राऽऽगमप्रदर्शनं च । १२७ ५

कारिका. ४२.
सूक्ष्मं शरीरं यथा संसरति, येन च कारणेन, तत्प्रदर्शयतीति कारिकावतारणं, तदर्थकथनोपपादने च । १२८ ११

कारिका. ४३.
निमित्तनैमित्तिकविभागपरतया कारिकावतारणं, तदर्थनिरूपणं च । १२९ १३

कारिका. ४४—४५.
कुत्र किं निमित्तमिति जिज्ञासया कारिकावतारणं, तदर्थकथनं च । १३० १३
बन्धत्रैविध्यनिरूपणम् । १३१ ७
अवशिष्टकारिकांशव्याख्यानम् । १३२ ५

कारिका . ४६.
सामान्यतो विशेषतश्च बुद्धिधर्मनिरूपणपरतया कारिकावतारणम् । ,, १७
कारिकार्थनिरूपणम् । १३३ ५

## कारिका. ४७.


| विषयः. | पृ. | पं. |
|---|---|---|
| पञ्चाशद्भेदबुद्धिधर्मगणनपरतया कारिकावतारणम्। | १३४ | १ |
| अस्मितादीनां विपर्ययत्वोपपादनम्। | ,, | ६ |
| प्रकारान्तरेण तदुपपादनम्। | ,, | १० |


## कारिका. ४८.


| | | |
|---|---|---|
| विपर्ययावान्तरभेदनिरूपणपरतया कारिकावतारणम्। | १३५ | ५ |
| कारिकार्थकथनं, तत्तद्विपर्ययभेदस्वरूपप्रदर्शनं च। | ,, | ११ |


## कारिका. ४९.


| | | |
|---|---|---|
| अशक्तिभेदनिरूपणपरतया कारिकावतारणम्, तदर्थनिरूपणं च। | १३६ | २० |


## कारिका. ५०.


| | | |
|---|---|---|
| तुष्टिभेदनिरूपणपरतया कारिकावतारणम्, तदर्थनिरूपणं च। | १३९ | ४ |


## कारिका. ५१.


| | | |
|---|---|---|
| सिद्धिभेदनिरूपणपरतया कारिकावतारणम्, तदर्थनिरूपणं च। | १४३ | १ |
| अन्यैः प्रकारान्तरेण कारिकाव्याख्यानम्। | १४४ | १९ |

विषयः. | पृ. पं.

एतेषु बुद्धिधर्मेषु के हेया इति जिज्ञासया 'सिद्धेः पूर्वः-'इत्याद्यंशावतारणं, तदर्थकथनं च । १४५ १२

---

कारिका. ५२.

उभयविधसर्गावश्यकत्वप्रदर्शनपरतया कारिकावतारणं, तदर्थकथनं च । १४६ ५

उभयोरन्योन्यापेक्षितयाऽऽवश्यकत्वकथनं, अन्योन्यापेक्षित्वेऽन्योन्याश्रयापत्तिरितिशङ्कानिरासश्च । १४७ ८

---

कारिका. ५३.

भूतादिसर्गविभाजकतया कारिकावतारणं, तदर्थकथनं च । " १८

---

कारिका. ५४.

अस्य सर्गस्य त्रैविध्यकथनपरतया कारिकावतारणं, तद्व्याख्यानं च । १४८ १४

---

कारिका. ५५.

सर्गस्य दुःखहेतुत्वप्रदर्शकतया कारिकावतारणं, तदर्थकथनं च । १४९ १०

---

कारिका. ५६.

सर्गस्य कारणविप्रतिपत्तिनिराकरणपरतया कारिकावतारणं, तद्व्याख्यानं च । १५० १२

कारिका. ५७.

विषयः. पृ. पं.

ईश्वरनिराकरणपरतया कारिकावतारणम्, तद्व्याख्यानं च । १५१ १४

कारिका. ५८.

स्वार्थसादृश्यस्य पारार्थ्यनिरूपणपरतया कारिकावतारणं, तद्व्याख्यानं च । १५३ १६

कारिका. ५९.

प्रकृतिः कुतो निवर्तत इतिशङ्कानिरासपरतया कारिकावतारणं, तद्व्याख्यानं च । १५४ १०

कारिका. ६०.

परार्थप्रवृत्तेः स्वार्थनान्तरीयकतया प्रकृतेश्च स्वार्थविरहेण कथं प्रवृत्तिरितिशङ्कानिराकरणपरतया कारिकावतारणं, तद्व्याख्यानं च । १५५ ३

कारिका. ६१.

प्रकृतिर्निवृत्ताऽपि पुनः कुतो न प्रवर्त्स्यत इतिशङ्कानिरासपरतया कारिकावतारणं, तद्व्याख्यानं च । ,, १६

कारिका. ६२.

पुरुषस्य कदाऽपि बन्धासम्भवात्कथमस्य मुक्तिरिति शङ्काया इष्टापत्तिरूपोत्तरप्रदानपरतया कारिकावतारणं, तद्व्याख्यानं च । १५६ १३

## कारिका. ६३.


| विषयः | पृ. | पं. |
|---|---|---|
| प्रकृतेरपि बन्धः किंनिमित्तक इतिशङ्कानिरासपरतया कारिकावतारणं, तद्व्याख्यानं च । | १५७ | १५ |


## कारिका. ६४.


| | | |
|---|---|---|
| अवगतमीदृशं तत्त्वं, ततः किमिति शङ्कया कारिकावतारणम्, तद्व्याख्यानं, तदर्थोपपादनं च । | १५८ | ९ |
| कारिकायाः प्रकारान्तरेण व्याख्यानम् । | १६० | १० |


## कारिका. ६५.


| | | |
|---|---|---|
| 'एतादृशेन तत्त्वसाक्षात्कारेण किं सिध्यति ?'-इति शङ्कया कारिकावतारणम् । | १६१ | ८ |
| तद्व्याख्यानं, तदर्थोपपादनं च । | " | १३ |


## कारिका. ६६.


| | | |
|---|---|---|
| 'तत्त्वज्ञानानन्तरमपि प्रकृतिपुरुषसंयोगस्य तदवस्थत्वात्कुतो न पुनः सर्गः ?'इति शङ्कया कारिकावतारणं, तद्व्याख्यानं च । | १६२ | ७ |


## कारिका. ६७.


| | | |
|---|---|---|
| तत्त्वज्ञानाव्यवहितोत्तरमेव देहपातोऽपि स्यादिति शङ्कया कारिकावतारणं, तद्व्याख्यानं च । | १६३ | १४ |

## कारिका. ६८.


| विषयः. | पृ. | पं. |
|---|---|---|
| संस्कारवशाच्छरीरं तिष्ठतीति चेत्पुनरनिर्मोक्षापत्तिरिति शङ्कया कारिकावतारणं तद्व्याख्यानं च। | १६५ | ५ |


---

## कारिका. ६९.


| | | |
|---|---|---|
| उक्तानामर्थानां श्रद्धेयतासिद्ध्यै परमर्ष्यभिमतत्वप्रदर्शनपरतया कारिकावतारणं, तद्व्याख्यानं च। | ” | १९ |


---

## कारिका. ७०-७१.


| | | |
|---|---|---|
| परमर्षिप्रोक्तानां प्रामाण्येऽपि कारिकाया ईश्वरकृष्णकृतायाः कुतः प्रामाण्यमिति शङ्कया कारिकावतारणं,तद्व्याख्यानं च। | १६६ | १४ |


---

## कारिका. ७२.


| | | |
|---|---|---|
| साङ्ख्यकारिकायाः शास्त्रत्वप्रदर्शनपरतया कारिकावतारणं, तद्व्याख्यानं च। | १६७ | १५ |
| ग्रन्थोपसंहारः। | १६८ | १५ |


---

* ॐ तत्सत् *

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥

# साङ्ख्यतत्त्वकौमुदी

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां नमामः ॥
अजा ये तां जुषमाणां भजन्ते
जहत्येनां भुक्तभोगां नुमस्तान् ॥ १ ॥

(१) तत्रभवान् विपश्चिदपश्चिमो वाचस्पतिमिश्रः सांख्यसूत्रभूतां कारिकावलीं व्याचिख्यासुः प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तिकारणेन कियद्वर्णान्यथाकारेण अजामेकामिति श्रौतेनैव मङ्गलेन 'ईक्षतेर्नाशब्दम्' इति सूत्रोक्ताशब्दत्वहेतुं श्लथयन्प्रधानस्य वैदिकत्वं च व्यवस्थापयन् सांख्यसिद्धान्तसूचनपूर्वकं प्रकृतिं पुरुषांश्च ग्रन्थादौ प्रणमति—अजामेकामिति। न जायते इति अजा मूलप्रकृतिरित्यर्थः। तां नमामः इति सम्बन्धः। ननु कथं प्रत्यक्षाविषयायाः प्रकृतेः सत्त्वं येन नमस्कारः सविषयः स्यादिति चेत्, कार्यलिङ्गकानुमानेन तस्याः सत्त्वं साधयति—बह्वीः प्रजाः सृजमानामिति। विमताः प्रजाः सुखदुःखमोहात्मकवस्तुप्रकृतिकाः तत्स्वभावान्वितत्वात् घटवत् इति प्रधानसिद्धिः। अनवस्थापरिहाराय परमाणूनां निराकरणाय च एकामित्युक्तम्। एकस्या अपि गुणवैचित्र्याद्विचित्रकार्यकर्तृत्वद्योतनाय लोहितशुक्ल-

कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये ॥
पञ्चशिखाय तथेश्वरकृष्णायैते(१)नमस्यामः ॥ २ ॥

इह खलु प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिता ऽवधेयवचनो भवति प्रेक्षावताम् । अप्रतिपित्सितमर्थं तु प्रतिपादयन् 'नायं लौकिको नापि परीक्षकः' इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत । स चैषां प्रतिपित्सितो ऽर्थो, यो ज्ञातः सन् परमपुरुषार्थाय कल्पते, इति प्रारिप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात्(२) तद्विषयजिज्ञासामवतारयति—

(३)दुःखत्रयाभिघाताज्
जिज्ञासा तदपघातके हेतौ ॥

---

कृष्णामिति । जुषमाणां स्वकार्यभोगादिभिः सेवमानाम् । भजन्ते तामेव आत्मत्वेन गृहीत्वा तद्धर्मान् आत्मन्यध्यस्यन्ति, त एव उत्पन्नविवेकज्ञानाः भुक्तभोगां जहति परित्यजन्ति ॥ १ ॥

(१) वयमिति शेषः

(२) प्रारब्धुमिष्टं यच्छास्त्रं तस्य यो विषयः पञ्चविंशतितत्त्वानि तज्ज्ञानस्य, परमपुरुषार्थो मोक्षः तस्य साधनं यद् सत्त्वपुरुषान्यताज्ञानं तस्य हेतुत्वात् ।

(३) अत्र अनुमानप्रकारस्तु-शास्त्रप्रतिपाद्यो विषय एव मुमुक्षुणा जिज्ञास्यः तं प्रति दुःखत्रयनिवृत्ति-

दृष्टे साऽपार्था चेत्
नैकान्तात्यन्ततोऽभावात् ॥ १ ॥

एवं हि शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न स्यात्, सद्वा न जिहासितम्, जिहासितं वा अशक्यमुच्छेदम्। अशक्यसमुच्छेदता च द्वेधा–दुःखस्य नित्यत्वात्, तदुच्छेदो-

रूपप्रयोजनवत्त्वात्। यद् यत् सप्रयोजनं तत् जिज्ञास्यं यथा धर्मादिकम्। अत्र शास्त्रविषयजिज्ञासामन्तरेणापि दृष्टोपायेनैव सप्रयोजनवत्त्वासिद्धौ शास्त्रविषयजिज्ञासा व्यर्था इति अन्यथासिद्धत्वं शङ्कते—दृष्टे साऽपार्थेति। तत्खण्डयति—नैकांतेति। एकान्तोदुःखनिवृत्तेरवश्यंभावो अर्थात्—दुःखनिवृत्तिरूपफलोपधायकत्वम्। अत्यंतो निवृत्तस्य दुःखस्य पुनरनुत्पादः अर्थात्—स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम्। तथाच इदमत्रानुमानशरीरम्–मुमुक्षुणा दृष्टोपायो न जिज्ञास्यः स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखत्रयनिवृत्तिरूपफलोपधायकत्वाभावात्। अतः एतादृशदुःखनिवृत्तिरूपफलसाधनत्वे शास्त्रीयज्ञानस्यैवेति तद्विषय एव मुमुक्षुणा जिज्ञास्यः। एतेन—यथाश्रुते दुःखापघातकहेतुरूपपक्षे आत्मनिष्ठस्य दुःखत्रयापघातस्य हेतोरसत्त्वात् कथमत्र हेतुसाध्यभाव इति शङ्का निरस्ता।

पायापरिज्ञानाद्वा। शक्यसमुच्छेदत्वेऽपि च शास्त्रविषयस्य ज्ञानस्यानुपायत्वाद्वा, सुकरस्योपायान्तरस्य सद्भावाद्वा॥

तत्र न तावद् दुःखं नास्ति नाप्यजिहासितमित्युक्तम्—"दुःखत्रयाभिघाताद्" इति। दुःखानां त्रयं दुःखत्रयम्। तत् खलु आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्च।

तत्राध्यात्मिकं द्विविधम्, शारीरं मानसं च। शारीरम्—वातपित्तश्लेष्मणां वैषम्यनिमित्तम्।

मानसं काम—क्रोध—लोभ—मोह—भयेर्ष्या—विषाद—विषयविशेषादर्शननिबन्धनम्। सर्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्।

बाह्योपायसाध्यं दुःखं द्वेधा, आधिभौतिकम्, आधिदैविकञ्च। तत्राधिभौतिकम्—मानुषपशुमृगपक्षिसरीसृपस्थावरनिमित्तम्। आधिदैविकं तु—यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम्। तदेतत् प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम्। तदनेन दुःखत्रयेणान्तःकरणवर्तिना चेतनाशक्तेः प्रतिकूलवेदनीयतयाऽभिसम्बन्धोऽभिघात इति। एतावता प्रतिकूलवेदनीयत्वं जिहासाहेतुरु-

क्तः। यद्यपि न सन्निरुध्यते(१) दुःखम्, तथाऽपि तदभिभवः शक्यः कर्तुमित्युपरिष्टादुपपादयिष्यते।

तस्मादुपपन्नम् "तदपघातके हेतौ" इति। तस्य दुःखत्रयस्य अपघातकः तदपघातकः। उपसर्जनस्यापि बुद्ध्या सन्निकृष्टस्य 'तदा'(२)परामर्शः। अपघातकश्च हेतुः शास्त्रप्रतिपाद्यो, नान्य इत्याशयः।

अत्र शङ्कते—"दृष्टे साऽपार्था चेत्" इति।

अयमर्थः—अस्तु तर्हि दुःखत्रयम्, जिहासितं च तद्भवतु, भवतु च तच्छक्यहानम्, सहतां च शास्त्रगम्य उपायस्तदुच्छेत्तुम्। तथाऽप्यत्र प्रेक्षावतां जिज्ञासा न युक्ता, दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वात्। तत्त्वज्ञानस्य तु अनेकजन्मा-

---

(१) सत्कार्यवादिनां साङ्ख्यानां मते दुःखस्य नित्यत्वात्।

(२) दुःखत्रयाभिघातरूपसमासे अभिघाते गुणभूतस्यापि दुःखत्रयस्य बुद्ध्या सन्निकृष्टस्य अर्थात् बुद्धिविषयस्य तच्छब्देन परामर्शः।

अयम्भावः—तदादिसर्वनाम्नां विशेष्यपरामर्शकत्वमिति नास्ति नियमः, किन्तु बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नबोधकत्वमेवेति विशेषणीभूतस्यापि दुःखत्रयस्य बुद्धिस्थत्वात्तत्पदेन ग्रहणं सम्भवतीति।

भ्यासपरम्पराऽऽयाससाध्यतयाऽतिदुष्करत्वात् ।

तथा च लौकिकानामाभाणकः—

अक्के(१) चेन्मधु विन्दते किमर्थं पर्वतं व्रजेत् ॥
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥ इति ।

सन्ति चोपायाः शतशः शारीरदुःखप्रतीकारायेषत्करा भिषजां वरैरुपदिष्टाः । मानसस्यापि सन्तापस्य प्रतीकाराय मनोज्ञस्त्री–पान–भोजन–विलेपन–वस्त्रालङ्कारादिविषयसम्प्राप्तिरुपायः सुकरः । एवमाधिभौतिकस्यापि दुःखस्य नीतिशास्त्राभ्यास–कुशलतानिरत्ययस्थानाध्यसनादिः प्रतीकारहेतुरीषत्करः । तथाऽऽधिदैविकस्यापि दुःखस्य मणिमन्त्रौषधाद्युपयोगः सुकरः प्रतीकारोपाय इति ॥

निराकरोति–"न" इति । कुतः ? "एकान्तात्यन्ततोऽभावात्" । एकान्तो–दुःखनिवृत्तेरवश्यम्भावः, अत्यन्तो–निवृत्तस्य दुःखस्य पुनरनुत्पादः, तयोः एकान्तात्यन्तयोरभावः एकान्तात्यन्ततोऽभावः । षष्ठीस्थाने सार्वविभक्तिकस्तसिः ।

एतदुक्तं भवति–यथाविधि रसायनादिकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपयोगेऽपि तस्य तस्या-

(१) अक्के गृहकोणे अर्के इति पाठे अर्कवृक्षे ।

ध्यात्मिकादेर्दुःखस्य निवृत्तेरदर्शनात् अनैकान्तिकत्वम्, निवृत्तस्यापि पुनरुत्पत्तिदर्शनात् अनात्यन्तिकत्वम्, इति सुकरोऽपि ऐकान्तिकात्यन्तिकदुःखनिवृत्तेर्न दृष्ट उपाय(१) इति नापार्था जिज्ञासेत्यर्थः ॥

यद्यपि दुःखममङ्गलम्, तथाऽपि तत्परिहारार्थत्वेन तदपघातो मङ्गलमेवेति युक्तं शास्त्रादौ तत्कीर्तनमिति।

॥ १ ॥

स्यादेतत्। मा भूद् दृष्ट उपायः, वैदिकस्तु ज्योतिष्टोमादिः सहस्रसंवत्सर(२)पर्यन्तः कर्मकलापस्तापत्रयमेकान्तमत्यन्तञ्चापनेष्यति। श्रुतिश्च, "स्वर्गकामो यजेत" इति। स्वर्गश्च—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्(३)
॥ १ ॥

इति। (तन्त्रवा०)

दुःखविरोधी सुखविशेषश्च स्वर्गः। स च स्वशक्त्या समूलघातमपहन्ति दुःखम्। न चैष क्षयी।

(१) दृष्ट उपायः दुःखनिवृत्तेः उपायः न इति उपायपदमावर्तनीयम्। (२) संवत्सरशब्दो दिनवाचकः इति मीमांसायां निर्णीतम्।

(३) स्वर्गपदवाच्यमित्यर्थः।

तथा हि श्रूयते—"अपाम सोममममृता अभूम" इति। तत्क्षये कुतोऽस्यामृतत्वसम्भवः ? तस्माद्वैदिकस्योपायस्य तापत्रयप्रतीकारहेतोर्मुहूर्तयामाहोरात्रमाससंवत्सरनिर्वर्तनीयस्यानेकजन्मपरम्पराऽऽयाससम्पादनीयात् विवेकज्ञानाद् ईषत्करत्वात् पुनरपि व्यर्था जिज्ञासा इत्याशङ्क्याह—

(१)दृष्टवदानुश्राविकः, स
ह्यविशुद्धिक्षयातिशययुक्तः ॥

(१) मुमुक्षुणा आनुश्रविकोऽप्युपायो न जिज्ञास्यः ऐकान्तिकात्यन्तिकदुःखत्रयानिवर्तकत्वात् दृष्टवत्।

अत्र हेतोरसिद्धत्वाशङ्कायां तं हेतुं साधयति–स हीति। आनुश्रविकोपायः ऐकान्तिकात्यन्तिकदुःखत्रयनिवर्तको न भवति अविशुद्धियुक्तत्वात क्षययुक्तत्वात् अतिशययुक्तत्वात्।

यद्यपि क्षयातिशयौ फलनिष्ठौ, उपायनिष्ठं क्षयातिशययुक्तत्वं न ऐकान्तिकात्यन्तिकदुःखत्रयनिवर्तकाभावप्रयोजकम्, क्षयिष्णुना सातिशयेन च उपायेन नित्यनिरतिशयफलजननसम्भवात् अतः क्षयिष्णुफलजनकत्वात् सातिशयफलजनकत्वात् इति हेतुः परिष्करणीयः। अविशुद्धियुक्तत्वादिति हेतुना च साङ्गस्य ज्योतिष्टोमादेः कर्मणः सुखजनकापूर्वजनजनकत्ववत् दुःखजनकपापापूर्वजनकत्वमस्ति इति द्यो-

तद्विपरीतः श्रेयान्,
व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥

"दृष्ट" इति। गुरुपाठादनु श्रूयते इत्यनुश्रवो वेदः। एतदुक्तं भवति-श्रूयत एव परं न केनापि क्रियते इति। तत्र भव आनुश्रविकः, तत्र प्राप्तो ज्ञात इति यावत्। आनुश्रविकोऽपि कर्मकलापो दृष्टेन तुल्यो वर्तते, ऐकान्तिकात्यन्तिकदुःखत्रयप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात्।

यद्यपि च "आनुश्रविकः" इति सामान्याभिधानम्, तथाऽपि कर्मकलापाभिप्रायं द्रष्टव्यम्, विवेकज्ञानस्या-

---

तितम्। तेन दुःखसंभिन्नसुखजनकत्वात् इति हेतुः पर्यवसितः। तथाच विषसंपृक्तमधुरभोजनवत् इदमपि मुमुक्षुणा हेयम् इति तात्पर्यम्। एवं च पूर्वपक्षे 'यन्न दुःखेन' इत्यादिना स्वर्गलक्षणमुपवर्ण्य तादृशस्वर्गसाधनत्वेन ऐकान्तिकात्यन्तिकदुःखनिवर्तकत्वं पूर्वपक्षिणा आनुश्रविकस्य उपायस्य यत् प्रसाधितं तत् खण्डितं भवति।

तथाहि-अविशुद्धियुक्तत्वेन पापजनकत्वात् ज्योतिष्टोमादेः कर्मणः दुःखसंभिन्नफलजनकत्वात दुःखासंभिन्नत्वरूपविशेषणस्य असिद्धिर्दर्शिता। एवं क्षयिष्णुरूपफलजनकत्वादित्यनेन 'नच ग्रस्तमनंतरम्' इति विशेषणं निरस्तं भवति। सातिशयफलजकत्वेन हेतुना 'अभिलाषोपनीतम्' इति विशेषणं निरस्तम्।

ष्यानुश्रविकत्वात् । तथा च श्रूयते—"आत्मा वाऽरे ज्ञातव्यः" प्रकृतितो विवेक्तव्यः(१) (२ । ४ । ५ ), "न स पुनरावर्तते" (छा० ८ । १५ ) इति ॥

अस्यां प्रतिज्ञायां हेतुमाह—"स ह्यविशुद्धिक्षयातिशययुक्तः" इति । "अविशुद्धिः" सोमादियागस्य पशुबीजादिवधसाधनता । यथाऽऽह स्म भगवान् पञ्चशिखाचार्यः—"स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः" इति । 'स्वल्पः सङ्करो' ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण सङ्करः । 'सपरिहारः,' कियताऽपि प्रायश्चित्तेन परिहर्तुं शक्यः ।

अथ च प्रमादतः प्रायश्चित्तमपि नाचरितम्, प्रधानकर्मविपाकसमये स पच्यते । तथाऽपि यावदसावनर्थं सूते तावत् प्रत्यवमर्षेण सहिष्णुतया सह वर्तत इति सप्रत्यवमर्षः । मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम् ॥

न च—"न हिंस्यात् सर्वा भूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेत"

(१) ज्ञातव्य इत्येतस्य साङ्ख्यमतेन व्याख्या प्रकृतितो विवेक्तव्य इति न तु अयं श्रौतः पाठः ।

इत्यनेन बाध्यते–इति युक्तम्, विरोधाभावात् । विरोधे हि बलीयसा दुर्बलं बाध्यते । न चेहास्ति कश्चिद्विरोधः, भिन्नविषयत्वात् ।

(१)तथा हि–"न हिंस्यात्"इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते, न त्वक्रत्वर्थत्वमपि, "अग्नीषोमीयं पशुमालभेत" इत्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते, नानर्थहेतुत्वाभावः, तथा सति वाक्यभेदप्रसङ्गात् । न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद्विरोधोऽस्ति । हिंसा हि पुरुषस्य दोषमाक्ष्यति, क्रतोश्चोपकरिष्यतीति ॥

क्षयातिशयौ च फलगतावप्युपाये उपचरितौ ।

---

(१) न हिंस्यादिति निषेधेन हि 'हिंसा पुरुषानर्थकरी'इत्येव बोध्यते नतु 'हिंसा क्रतूपकारिका न' इत्येवमपि । एवं 'पशुमालभेत' इतिवाक्येनापि 'हिंसा यागोपकारिणी, इत्येव ज्ञाप्यते, नतु "हिंसा नानर्थकरी" इति । एवं च भिन्नार्थबोधकत्वान्न विरोधः । यदि च न हिंस्यादित्यस्य 'हिंसाऽनर्थहेतुः अक्रत्वर्था च' इति अर्थद्वयम्, तथा "अग्निषोमीयं पशुमालभेत' इत्यस्यापि 'पश्वालम्भनं क्रत्वर्थं, नानर्थहेतुः' इति अर्थद्वयं कल्प्येत' तदा वाक्यभेदः स्यात् स चानिष्ट इत्यभिप्रायेणाह *तथाहीति ।

क्षयित्वं च स्वर्गादेः 'सत्त्वे सति कार्यत्वात्'अनुमितम् । ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनम्, वाजपेयादयस्तु स्वाराज्यस्येत्यसातिशययुक्तत्वम् । परसम्पदुत्कर्षो हि हीनसम्पदं पुरुषं दुःखाकरोति ॥

"अपाम सोममममृता अभूम" इति चामृतत्वाभिधानं चिरस्थेमानमुपलक्षयति(१) । यदाहुः-

"आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते" इति ॥

अत एव च श्रुतिः-

"न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः ।

परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति"इति ।

तथा "कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः ।

तथा परे ऋषयो ये मनीषिणः परं कर्मभ्यो ऽमृतत्वमानशुः"इति च ॥

तदेतत् सर्वमभिप्रेत्याह-"तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्" इति । तस्माद्— आनुश्रविकात् दुःखापघातकोपायात् सोमपानादेरविशुद्धाद् अनित्यसातिशयफलात् विपरीतः विशुद्धः हिंसा-

(१) चिरस्थेमानं चिरस्थायित्वमित्यर्थः ।

दिसङ्कराभावात्, नित्यनिरतिशयफलः, असकृत् अपुनरावृत्तिश्रुतेः। न च कार्यत्वेनानित्यता फलस्य युक्ता, भावकार्यस्य तथात्वात्, दुःखप्रध्वंसस्य तु कार्यस्यापि तद्वैपरीत्यात्। न च दुःखान्तरोत्पादः, कारणाप्रवृत्तौ कार्यस्यानुत्पादात्, विवेकज्ञानोपजननपर्यन्तत्वाच्च कारणप्रवृत्तेः। एतच्चोपरिष्टादुपपादयिष्यते।

अक्षरार्थस्तु—तस्मात्—आनुश्रविकात् दुःखापघातकात् हेतोः, विपरीतः—सत्त्वपुरुषान्यताप्रत्ययः साक्षात्कारो दुःखापघातको हेतुः, अत एव श्रेयान्। आनुश्रविको हि वेदविहितत्वात् मात्रया(१)दुःखापघातकत्वाच्च प्रशस्यः। सत्त्वपुरुषान्यताप्रत्ययोऽपि प्रशस्यः। तदनयोः प्रशस्ययोर्मध्ये सत्त्वपुरुषान्यताप्रत्ययः श्रेयान्।

कुतः पुनरस्योत्पत्तिः? इत्यत आह—"व्यक्ताव्यक्तज्ञविज्ञानात्" इति। व्यक्तं च अव्यक्तं च ज्ञश्च व्यक्ताव्यक्तज्ञाः, तेषां विज्ञानं विवेकेन ज्ञानम्, व्यक्ताव्यक्तज्ञविज्ञानम्। व्यक्तज्ञानपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानम्। तयोश्च पारार्थ्येनात्मा परो ज्ञायते, इति ज्ञानक्रमेणाभिधानम्।

(१) लेशेनेत्यर्थः।

एतदुक्तं भवति–श्रुतिस्मृतीतिहासपुराणेभ्यो व्यक्तादीन् विवेकेन श्रुत्वा, शास्त्रयुक्त्या च व्यवस्थाप्य दीर्घकालादरनैरन्तर्यसत्कारासेविताद् भावनामयाद् विज्ञानमिति। तथा च वक्ष्यति–

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्। (६४) इति।

॥ २ ॥

तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारम्भं समाधाय शास्त्रमारभमाणः श्रोतृबुद्धिसमवधानाय तदर्थं सङ्क्षेपतः प्रतिजानीते–

मूलप्रकृतिरविकृति-
र्महदाद्याः प्रकृतिविकृतयः सप्त॥
षोडशकस्तु विकारो
न प्रकृतिर्न विकृतिः पुरुषः॥ ३॥

सङ्क्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः। कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थो विकृतिरेव, कश्चित्प्रकृतिविकृतिः, कश्चिदनुभयरूपः।

तत्र का प्रकृतिः? इत्युक्तम्–"मूलप्रकृतिरविकृतिः" इति। प्रकरोतीति प्रकृतिः प्रधानम्, सत्त्वरजस्तमसां साम्यावस्था, सा अविकृतिः, प्रकृतिरेवेत्यर्थः।

कुतः ? इत्युक्तम्—, "मूलेति" । मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः । विश्वस्य कार्यसङ्घातस्य सा मूलम्, न त्वस्या मूलान्तरमस्ति, अनवस्थाप्रसङ्गात् । न चानवस्थायां प्रमाणमस्तीति भावः ।

कतमाः पुनः प्रकृतिविकृतयः, कियत्यश्च ? इत्यत उक्तम्—"महदाद्याः प्रकृतिविकृतयः सप्त" इति । प्रकृतयश्च विकृतयश्च ता इति प्रकृतिविकृतयः सप्त ।

तथा हि—महत्तत्त्वमहङ्कारस्य प्रकृतिः, विकृतिश्च मूलप्रकृतेः । एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणां च प्रकृतिः, विकृतिश्च महतः । एवं पञ्चतन्मात्राणि तत्त्वानि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य ।

अथ का विकृतिरेव, कियती च ? इत्यत उक्तम्—"षोडशकस्तु विकारः" इति । षोडशसङ्ख्यापरिमितो गणः षोडशकः । तुशब्दोऽवधारणे भिन्नक्रमश्च । पञ्च महाभूतानि एकादश इन्द्रियाणि चेति षोडशको गणो विकार एव, न प्रकृतिरिति। यद्यपि च पृथिव्यादीनां गोघटवृक्षादयो विकाराः, एवं तद्विकारभेदानां पयोबीजादीनां दध्यङ्कुरादयः, तथाऽपि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरम् । 'तत्त्वा-

न्तरोपादानत्वं च प्रकृतित्वम्' इहाभिप्रेतमिति न दोषः। सर्वेषां गोघटादीनां स्थूलत्वेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम्(१)।

(१) गोघटादयः पृथिव्यादिभ्यस्तत्त्वान्तरं न भवन्ति, स्थूलत्वेन्द्रियग्राह्यत्वयोस्तारतम्याभावात्। यत्र हि तत्त्वान्तरत्वं तत्र स्थूलत्वेन्द्रियग्राह्यत्वयोस्तारतम्यमनुभूयते। यथा सांख्यमते गुणगुणिनोरभेदादाकाशः शब्दैकगुणः अत्यन्तं सूक्ष्मः, ततो द्विगुणो वायुः स्थूलः, ततस्त्रिगुणं तेजः स्थूलम्, ततोऽपि चतुर्गुणा आपः स्थूलतमाः, ततोऽपि पञ्चगुणा समष्टिरूपा पृथिवी अत्यन्तं स्थूला। अतएव पृथिवीतो जलं सूक्ष्मं, तदपेक्षया किञ्चित् सूक्ष्मं तेजः, इत्येवंक्रमेण सूक्ष्मत्वतारतम्यमनुभूयते। यद्यपि अहङ्कारतत्त्वापेक्षया आकाशोऽपि स्थूल एव, तथापि पृथिव्याद्यपेक्षया सूक्ष्मत्वं द्रष्टव्यम्।

एवं च यादृशं पञ्चभूतानां प्रत्येकं स्थूलत्वतारतम्यमनुभवसिद्धं तादृशं गोघटादीनां पयोबीजादीनां वा नानुभूयते, सर्वेष्वेव समानं स्थूलत्वमनुभूयते। पृथिव्यां हि सर्वापेक्षया स्थूलत्वमनुभूयते, यथा जले उन्मज्जननिमज्जनादिकं कर्तुं शक्यते, न तथा पृथिव्यां, तस्याः प्रतिघातादिधर्मवत्त्वात्। एवमग्रेऽपि। एवं पृथिव्याः पञ्चगुणात्मकत्वात् पञ्चेन्द्रियग्राह्यता विद्यते, जले एकस्य गुणस्य ह्रासात् चतुरिन्द्रियग्राह्यता, तेजसि इन्द्रियत्रयग्राह्यत्वं

अनुभयरूपमुक्तं, तदाह-"न प्रकृतिर्न विकृतिः पुरुषः" इति । एतच्च सर्वमुपरिष्टादुपपादयिष्यते ॥

॥ ३ ॥

तमिममर्थं प्रामाणिकं कर्तुमभिमताः प्रमाणभेदा

---

त्रिगुणत्वात् , तदपेक्षया वायौ द्विगुणत्वात् द्वीन्द्रियग्राह्यता, एवं यत्र यत्र तत्त्वान्तरत्वं पञ्चभूतेषु तत्र तत्र स्थूलत्वेन्द्रियग्राह्यत्वयोः तारतम्यं स्पष्टं दृश्यते, नैवं घटादिषु । तत्र हि यादृशं स्थूलत्वमिन्द्रियग्राह्यत्वं च पृथिव्यां तादृशमेव गोघटादिषु । कुतः ? सर्वेषां समानगुणत्वात् । एतदेवाह ग्रन्थकारः-स्थूलतेति । एवमेव पञ्चभूतकारणस्य अहङ्कारस्य पञ्चभूतापेक्षया सूक्ष्मत्वं महत्तत्त्वापेक्षया स्थूलत्वम्, एवं महत्तत्वस्य तत्कारणस्य तदपेक्षया सूक्ष्मत्वम्, एवं अव्यक्तापेक्षया स्थूलत्वम, एवं अव्यक्तस्य च सर्वकारणत्वात् सर्वापेक्षया सूक्ष्मत्वम्, अत एव तस्य अव्यक्तशब्दाभिधेयत्वम् । इत्येवंरीत्या यत्र यत्र तत्त्वान्तरत्वं तत्र तत्र स्थूलत्वसूक्ष्मत्वतारतम्यमस्त्येवेति न व्यभिचारप्रसक्तिः । एतच्च 'सूक्ष्मविषयत्वमलिङ्गपर्यवसानम्' इतियोगसूत्रभाष्ये स्पष्टम् । इन्द्रियग्राह्यत्वस्य महदादौ अभावादेव तेषु तत्तारतम्यं न भवति किन्तु पृथिव्यादिषु तदुभयमपि विद्यते इति तदुभयं हेतुत्वेन उपात्तम् । अत एव समुच्चयार्थश्चकारः । एतच्च शारीरकमीमांसाभाष्यव्याख्यानावसरे द्वितीयाध्यायस्य द्वितीयपादे नैयायिकमतदूषणप्रक्रियायां 'उभयथा च दोषात्'(२-२-१६) इति सूत्रस्थभामत्यां स्पष्टम् ।

लक्षणीयाः, न च सामान्यलक्षणमन्तरेण शक्यते विशेषलक्षणं कर्तुमिति प्रमाणसामान्यं तावल्लक्षयति—

दृष्टमनुमानमाप्तवचनं च,
सर्वप्रमाणसिद्धत्वात् ॥
त्रिविधम्प्रमाणमिष्टं,
प्रमेयासिद्धिः प्रमाणाद्धि ॥ ४ ॥

अत्र च 'प्रमाणम्' इति समाख्यया(१) लक्ष्य-

---

(१) संज्ञया।

अत्र च धारावाहिकबुद्धिस्थलेऽनधिगतविषयत्वाभावेनाऽव्याप्तिरिति नाऽऽशङ्कनीयम्। तत्राऽपि तत्तत्क्षणविशिष्टविषयकत्वेनाऽनधिगतविषयकत्वसम्भवात्।

न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते—

इत्यभियुक्तोक्तेः। यद्यपि सांख्याचार्यैः कालरूपं तत्त्वान्तरं नाऽभ्युपगम्यते, तथाऽपि यैः कालः स्वीक्रियते तन्मतेऽपि अखण्डस्य एकस्य कालस्य अतीतानागतादिव्यवहारजनकत्वासम्भवादुपाधिभेदैरेव तदुपपादनीयम्। एवञ्च सांख्यमतेऽपि व्यवहारस्याऽप्रत्याख्यानात्तज्जनकत्वं क्लृप्तानामुपाधीनामेव स्वीक्रियत इति तेषामेव कालत्वेन तद्विषयकत्वमादायैव अनधिगतविषयकत्वस्योपपादने बाधकाभावात्। यदि च कालस्य प्रत्यक्षत्वं न भवतीत्याग्रहस्तदा धारावाहिकबुद्धिस्थले ज्ञानभेदो न स्वीक्रियते, यावद्घटस्फु-

परम् । तन्निर्वचनं च लक्षणम् । प्रमीयतेऽनेनेति निर्वचनात् प्रमां प्रति करणत्वं गम्यते । असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः, बोधश्च पौरुषेयः फलं प्रमा, तत्साधनं प्रमाणमिति(१) । एतेन संशय-

रणं तावद्घटाकारान्तःकरणवृत्तिरेकैव, न तु नाना, वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तस्थायित्वाभ्युपगमात्, अतो नाऽव्याप्तिः । तथाऽपि अधिगतस्यैव घटस्य कालभेदेनेन्द्रियजन्यज्ञाने जातेऽनधिगतविषयकत्वाभावेनाऽव्याप्तिस्तदवस्थैवेति चेत्तदाऽनधिगतविषयकत्वपदेन यज्जातीयविशिष्टज्ञानत्वावच्छेदेन स्वसमानाकारकनिश्चयोत्तरत्वं तज्जातीयान्यत्वमेव विवक्षितम् । स्मृतिजातीयविशिष्टज्ञानत्वावच्छेदेन स्वसमानाकारकनिश्चयोत्तरत्वस्यैव सत्त्वेन तज्जातीयान्यत्वाभावात्स्मृतौ नाऽतिप्रसङ्गः । घटविषयकप्रत्यक्षजातीयविशिष्टज्ञानत्वावच्छेदेन तत्समानाकारनिश्चयोत्तरत्वस्याऽभावेन तज्जातीयान्यत्वादधिगतघटविषयकज्ञाने नाऽव्याप्तिरिति सर्वं चतुरस्रम् ।

(१) "फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः"(यो. भा. १ पा. सू. ६) इति योगभाष्यानुसारात् चैतन्यप्रतिबिम्बविशिष्टबुद्धिवृत्तिः वृत्तिप्रतिबिम्बितचैतन्यं वा फलपदार्थः, स एव मुख्यप्रमाशब्दवाच्यः । एतादृशप्रमाकरणत्वेन बुद्धिवृत्तेः प्रमाणत्वं व्यपदिश्यते, तत्करणत्वेन च इन्द्रियादीन्यपि प्रमाणशब्दवाच्यानि भवन्ति ।

तथाच एतन्मते प्रमा प्रमाणं च द्विविधम् । इन्द्रियादीनां प्रमाणत्वे बुद्धिवृत्तेः प्रमात्वं, तस्याः प्रमाणत्वे पौरुषेयबोधस्य प्रमात्वम् । अतः 'अयं घटः' इत्याद्याकारिका अन्तःकरणवृत्तिः प्रमाणम् । 'घटमहं जानामि' इत्याद्यनुव्यवसायः पुरुषे बुद्धिवृत्तिप्रतिबिम्बरूपः पौरुषेयो बोधः इति यत् केषांचिद्व्याख्यानं तन्निरस्तम् ।

यथाहि–जले चन्द्रस्य प्रतिबिम्बः, नतु चन्द्रे जलादेः प्रतिबिम्बः, किन्तु जलगते प्रतिबिम्बे एव जलगताः चञ्चलत्वमलिनत्वादयो धर्माः आरोप्यन्ते, एवं चन्द्रगताः प्रकाशत्वादयो धर्माः जले आरोप्यन्ते, गगनगते मुख्यचन्द्रे तु न आरोपः, किंतु 'चन्द्रः कम्पते' इत्यादिशब्दप्रयोगमात्रम्, तद्वत् बुद्धौ चैतन्यप्रतिबिम्बे आपतिते बुद्धिगताः सुखदुःखादयो धर्माः सान्निध्यात् प्रतिबिम्ब एव आरोप्यन्ते, न तु बिम्बे, उपाधेः प्रतिबिम्बपक्षपातित्वात् । एवं बिम्बगताश्च चेतनत्वादयो बुद्धौ प्रतिभासन्ते, अतः बुद्धिपुरुषयोः भेदाग्रहात् बुद्धिरचेतनाऽपि चेतनेव, पुरुषः सुखदुःखादिरहितोऽपि तद्वानिव लक्ष्यते इति पुरुषे बुद्धेः प्रतिबिम्बानङ्गीकारेऽपि सर्वव्यवहारोपपत्तौ पुरुषे बुद्धिप्रतिबिम्बकल्पना व्यर्था ।

यत्तु—

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।<br>
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥

इति पुरुषे बुद्धिप्रतिबिम्बसाधकं वचनं तत् चित्प्रतिबिम्बरूपदर्पणे इति व्याख्येयम् ।

विपर्ययस्मृति(१)साधनेष्वप्रसङ्गः(२) ।

सङ्ख्याविप्रतिपत्तिं(३) निराकरोति—"त्रिविधम्"

एवं च सति अनुव्यवसायरूपबुद्धिवृत्तेरपि चैतन्यप्रतिबिम्बविशिष्टत्वादेव प्रकाशकत्वम्, नतु पुरुषे तत्प्रतिबिम्बद्वारा, इति सुष्ठूक्तम्–बुद्धिवृत्तिप्रतिबिम्बितचैतन्यमेव पौरुषेयो बोध इति। अधिकं तु योगभाष्यवाचस्पत्ये द्रष्टव्यम् ।

( १ ) स्मृतेर्यथार्थत्वं नास्ति, नहि यादृशोऽर्थः स्मर्यते यदा तादृश एवासौ तदा, अनुभवेन हि घटोऽयमित्याकारेण वर्तमानो घटो विषयीक्रियते, स्मृत्या तु स घट इति पूर्वावस्थाविशिष्टः, नच स्मृतिकाले पूर्वावस्था वर्तमाना, तस्या अनिवृत्तौ पूर्वतैव न स्यात्, वर्तमानध्वंसप्रतियोगिन एव पूर्वत्वात्, तथा च पूर्वावस्थाधारत्वविशिष्टस्य तद्विशिष्टतया विषयीकरणात् स्मृतिरप्रमा । नच निवृत्तपूर्वावस्थतयैव तमर्थं स्मृतिरालम्बत इति वाच्यम्, पूर्वावस्थानिवृत्तेरननुभूतत्वात्, अननुभूते चार्थे स्मृतेरप्रवृत्तेः । तस्मात्स्मृतेरलक्ष्यत्वमाश्रित्यानधिगतपदेन तद्वारणं सङ्गतमेवेति ध्येयम् । विस्तरस्त्वाकरे द्रष्टव्यः ।

( २ ) नातिव्याप्तिरित्यर्थः । असन्दिग्धादिपदानामनुपादाने सन्देहविपर्ययादिरूपाणामपि चित्तवृत्तीनां प्रमाणत्वप्रसङ्ग इति भावः ।

( ३ ) प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकाः, प्रत्यक्षमनुमानं चेति द्वे एवेति वैशेषिकाः, प्रत्यक्षमनुमानमा-

इति। तिस्रो विधा अस्य प्रमाणसामान्यस्य तत् त्रिविधम्, न न्यूनं, नाप्यधिकमित्यर्थः। विशेषलक्षणानन्तरञ्चैतदुपपादयिष्यामः।

कतमाः पुनस्ता विधाः? इत्यत आह—"दृष्टमनुमानमाप्तवचनं च" इति। एतच्च लौकिकप्रमाणाभिप्रायम्, लोकव्युत्पादनार्थत्वाच्छास्त्रस्य, तस्यैवात्राधिकारात्। आर्षं तु विज्ञानं योगिनामूर्ध्वस्रोतसां(१) न लोकव्युत्पादनायालमिति सदपि नाभिहितम्, अनधिकारात्।

स्यादेतत्—मा भून्न्यूनम्, अधिकं तु कस्मान्न भवति? सङ्गिरन्ते हि प्रतिवादिनः उपमानादीन्यपि प्रमाणानि, इत्यत आह—"सर्वप्रमाणसिद्धत्वात्"इति। एष्वेव दृष्टानुमानाप्तवचनेषु सर्वेषां प्रमाणानां सिद्ध-

गम इति साङ्ख्याः, उपमानेन सह चत्वार्येतानि प्रमाणानीति नैयायिकाः, अर्थापत्त्यनुपलब्धिभ्यां सह षट् प्रमाणानीति भाट्टवेदान्तिनौ, सम्भवैतिह्याभ्यां सहाष्टाविति पौराणिकाः, चेष्टया सह नवेत्यालङ्कारिकाः, सेयं सङ्ख्याविप्रतिपत्तिरित्यर्थः।

(१) ऊर्द्ध्वं विषयेभ्यो बहिः परे तत्त्वे स्रोतः-वृत्तिप्रवाहो येषां योगिनाम्।

त्वात्—अन्तर्भावादित्यर्थः । एतच्चोपपादयिष्यत इ-
त्युक्तम् ।

अथ प्रमेयव्युत्पादनाय प्रवृत्तं शास्त्रं कस्मात् प्र-
माणं सामान्यतो विशेषतश्च लक्षयति ? इत्यत आह—
"प्रमेयसिद्धिः प्रमाणाद्धि" इति । सिद्धिः–प्रतीतिः ।

सेयमार्याऽर्थक्रमानुरोधेन(१) पाठक्रममनादृत्यैव
व्याख्याता ।

॥ ४ ॥

सम्प्रति प्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य सर्व-
प्रमाणेषु ज्येष्ठत्वात् तदधीनत्वाच्चानुमानादीनां सर्व-
वादिनामविप्रतिपत्तेश्च, तदेव तावल्लक्षयति—

**प्रतिविषयाध्यवसायो दृष्टं,**

---

(१) अग्निहोत्रं जुहोति यवागूं पचतीति पाठ-
क्रमानुसारेणानुष्ठाने अग्निहोत्रहोमस्य श्रुतद्रव्यं विहा-
य द्रव्यान्तरेण कल्पितेनानुष्ठानं कर्तव्यतयाऽऽपतति,
तदनन्तरं च यवागूपाकस्य दृष्टप्रयोजनाभावेन केवलम-
दृष्टार्थकत्वं कल्पितं स्यादिति प्रयोजनवशात् क्रम-
माश्रित्य पूर्वं यवागूं पक्त्वाऽनन्तरं होमः कर्तव्य इति
सिद्धान्तितं मीमांसायां, तेनैव प्रकारेणाऽत्रापि पाठक्रम-
मनादृत्यैव व्याख्यानं कृतमित्यर्थः ।

त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकम्,
आप्तश्रुतिराप्तवचनं तु ॥ ५ ॥

"प्रतिविषयाध्यवसायो दृष्टम्" इति । अत्र "दृष्टम्" इति लक्ष्यनिर्देशः, परिशिष्टं तु लक्षणम् । समानासमानजातीयव्यवच्छेदो लक्षणार्थः(१) ।

अवयवार्थस्तु—विषिन्वन्ति—विषयिणमनुबध्नन्ति, स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत् । "विषयाः" पृथिव्यादयः सुखादयश्च । अस्मदादीनामविषयाः तन्मात्रलक्षणाः योगिनामूर्ध्वस्रोतसां च विषयाः । विषयं विषयं प्रति वर्तते इति प्रतिविषयम् । वृत्तिश्च सन्निकर्षः(२) । अर्थसन्निकृष्टमिन्द्रिय-

(१) समानजातीयेभ्यः असमानजातीयेभ्यश्च पदार्थेभ्यो यो व्यवच्छेदः—व्यावर्तनं स एव लक्षणस्य प्रयोजनमित्यर्थः । अनेन समानासमानजातीयव्यवच्छेदकत्वमिति लक्षणलक्षणमपि सूचितं भवति ।

सजातीयमात्रव्यवच्छेदके विशेषणेऽतिव्याप्तिवारणाय असमानेति । विजातीयव्यवच्छेदके गोत्वादौ अतिव्याप्तिनिरासाय समानेति ।

(२) वर्तते इति पदघटकवृतुधात्वर्थरूपा वृत्तिश्चात्र सन्निकर्ष एव, न त्विन्द्रियाणां विषयदेश-

मित्यर्थः । तस्मिन् अध्यवसायः, तदाश्रित इत्य-र्थः । अध्यवसायश्च बुद्धिव्यापारो ज्ञानम्, उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाऽऽख्यायते । इदं तत्र प्रमाणम् । अनेन(१) यश्चेतनाशक्तेरनुग्रहस्तत्फलं प्रमा बोधः ।

बुद्धितत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोऽध्यवसायोऽप्यचेतनः, घटादिवत् । एवं बुद्धितत्त्वस्य सुखादयोऽपि परिणामभेदा अचेतनाः । पुरुषस्तु सुखाद्यननुषङ्गी चेतनः । सोऽयं बुद्धितत्त्ववर्तिना ज्ञानसुखादिना (२)तत्प्रतिबिम्बितस्तच्छायाप-

---

गमनमित्यर्थः ।

(१) अनेन–बुद्धिव्यापारेण केवलेन यश्चेतनाशक्तेरनुग्रहः–बुद्धिव्यापाररूपवृत्तौ प्रतिबिम्बः, स एव फलं, तथा च बुद्धिवृत्तिप्रतिबिम्बितं चैतन्यं चैतन्यप्रतिबिम्बविशिष्टा वा बुद्धिवृत्तिः फलं प्रमेति पौरुषेयबोध इति चोच्यते । एवञ्च विषयसन्निकृष्टेन्द्रियजन्यबुद्धिवृत्त्यभिव्यक्तचैतन्यं चैतन्यप्रतिबिम्बविशिष्टबुद्धिवृत्तिर्वा प्रत्यक्षप्रमेति फलितार्थः ।

(२) तत्प्रतिबिम्बितः–तस्यां बुद्धौ प्रतिबिम्बितः । तच्छायापत्त्या–बुद्धिच्छायापत्त्या । बुद्धिच्छायापत्तिश्च

त्त्या ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते। चितिच्छायापत्त्याऽचेतनाऽपि बुद्धिस्तदध्यवसायोऽप्यचेतनश्चेतनवद्भवतीति। तथा च वक्ष्यति–

(१)तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः(२१)इति।

अत्राऽध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति, संशयस्याऽनवस्थितग्रहणत्वेनाऽनिश्चितरूपत्वात्। निश्चयोऽध्यवसाय इति चानर्थान्तरम्(२)। विषयग्रहणेन चाऽसद्विषयं विपर्ययमपाकरोति। प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयश्च पराकृता भवन्ति।

तदेवं समानासमानजातीयव्यवच्छेदकत्वात् "प्रतिविषयाध्यवसायः" इति दृष्टस्य सम्पूर्णं लक्षणम्। तन्त्रान्तरेषु लक्षणान्तराणि तैर्थिकानां न दूषितानि,

---

न पुरुषे बुद्धिप्रतिबिम्बः, किन्तु बुद्धौ पुरुषस्य यः प्रतिबिम्बः, तस्मिन् बुद्धिधर्माणामध्यारोपः, उपाधेः प्रतिबिम्बपक्षपातित्वात् स एव बुद्धिच्छायापत्तिपदार्थः।

(१) यतः चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे, तस्मात् पुरुषसन्निधानादचेतनमपि महदादिकं लिङ्गं चेतनवद्भवति, तथा गुणानामेव कर्तृत्वेऽपि पुरुषोऽकर्ताऽप्युदासीनः कर्तेव भवतीत्यर्थः।

(२) पर्याय इत्यर्थः।

विस्तरभयादिति ।

'नाऽनुमानं प्रमाणम्'इति वदता लोकायतिकेनाऽप्रतिपन्नः सन्दिग्धो विपर्यस्तो वा पुरुषः कथं प्रतिपद्येत ?(१) । न च पुरुषान्तरगता अज्ञानसन्देहविपर्ययाः शक्या अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुम्, नाऽपि प्रमाणान्तरेण, अनभ्युपगमात् । अनवधृताज्ञानसंशयविपर्ययस्तु यं कञ्चन पुरुषं प्रति प्रवर्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत । तदनेनाऽज्ञानादयः पर-

---

(१) ज्ञापयेतेत्यर्थः । अयमभिप्रायः । चार्वाकेण प्रत्यक्षमेवैकं प्रमाणमिति स्वगृहेऽवस्थायोद्घोषितमपि न स्वाभिलषितसाधनाय पर्याप्तं भविष्यतीति सभायां वादिना सह कस्याञ्चित्कथायामेतत्साधनीयम्, परन्तु यद्यसौ परकीयमज्ञानं संशयं विपर्ययं वा नाऽवधारयेत्, तर्हि कथङ्कारं तन्निवारणाय वाक्यमुच्चारयेत्?यद्यपरिज्ञायैवाऽज्ञानादीनि वाक्यमुच्चारयेत्तर्हि प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येतेत्यवश्यमनेन चार्वाकेण अयं वादी अस्मिन्नर्थेऽज्ञानवान्, सन्दिग्धः, विपर्यस्तो वा, विलक्षणचेष्टाविशेषात्, नाऽहं जाने, सन्दिहानोऽहं, विपर्यस्तोऽहमितिवाक्यप्रयोक्तृत्वादिति लिङ्गद्वारा परकीयमज्ञानादिकमनुमातव्यं, न चैवदनुमानप्रामाण्यमन्तराऽवकल्पत इति सिद्धं प्रमाणान्तरमनुमानमित्यर्थः ।

पुरुषवर्तिनोऽभिप्रायभेदाद्वचनभेदाद्वा लिङ्गादनुमातव्याः, इत्यकामेनाऽप्यनुमानं प्रमाणमभ्युपेयम् ।

तत्र प्रत्यक्षकार्यत्वादनुमानं प्रत्यक्षानन्तरं लक्षणीयम् । तत्राऽपि सामान्यलक्षणपूर्वकत्वाद्विशेषलक्षणस्येत्यनुमानसामान्यं तावल्लक्षयति—"तल्लिङ्गलिङ्गिपूर्वकम्" इति । लिङ्गम्—व्याप्यम्(१) । लि-

(१) व्याप्यं नाम व्याप्तिविशिष्टं, व्याप्तिर्नाम साध्येन सह हेतोः सम्बन्धविशेषः, यः प्रतिबन्धोऽविनाभाव इत्यादिशब्दैर्व्यवह्रियते । स च द्विविधः—स्वाभाविकः, अर्थात् निरुपाधिकः, सोपाधिकश्च, तत्र यो निरुपाधिकः सम्बन्धविशेषः स एवाऽनुमानाङ्गं, सोपाधिकस्तु व्याप्यत्वासिद्ध इत्युच्यते, यत उपाधिर्नाम उपस्वसमीपवर्तिनि स्वधर्ममादधाति सङ्क्रामयतीत्युपाधिः, यथा जपाकुसुमं स्वसमीपवर्तिनि स्फटिके स्वगतधर्मं लौहित्यमासञ्जयतीत्युपाधिशब्दवाच्यम्, तथा स्फटिके भासमानं यल्लौहित्यं तदौपाधिकमिति व्यवह्रियते, जपाकुसुमे च स्वाभाविकमिति व्यवह्रियते, तदेव वास्तवं, स्फटिके तु समारोपितं भवति लौहित्यं, तद्वत् सोपाधिकधूमसाध्यकवन्हिहेतौ धूमनिरूपितं व्याप्यत्वं वास्तवं नाऽस्ति, किन्तु औपाधिकं, उपाधिश्चाऽऽर्द्रेन्धनसंयोगः, वस्तुतः स एव धूमप्रयोजक इति तत्रैव धूमनिरूपिता व्याप्तिः स्वाभाविकी, वन्हौ तु तत्सन्निधानात् व्याप्तिभ्रमो भवति, अत एवोक्तम्—

ङ्गि–व्यापकम् । शङ्कितसमारोपितोपाधिनिराकरणेन च वस्तुस्वभावप्रतिबद्धं व्याप्यम्, येन प्रतिबद्धं तद्व्यापकम् । लिङ्गलिङ्गिग्रहणेन विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति । 'धूमादिर्व्याप्यो वह्न्यादिर्व्यापकः' इति यः प्रत्ययस्तत्पूर्वकम् । लिङ्गिग्रहणं चाऽऽवर्तनीयम् । तेन च लिङ्गमस्याऽस्तीति पक्षधर्मताज्ञानमपि दर्शितं भवति । तत् 'व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानम्' इत्यनुमानसामान्यं लक्षितम् ।

अनुमानविशेषान् तन्त्रान्तरलक्षितान् अभिमतान्

---

"अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ।" इति ।

अन्ये—सोपाधिका हेतवः, परप्रयुक्तानां—उपाधिप्रयुक्तानां व्याप्तिनाम्, उपजीवकाः—आश्रयाः, अत एव तैः—सोपाधिकैर्हेतुभिः पक्षे दृष्टैरपि व्यापकांशस्य—साध्यस्याऽवधारणा न युक्तेति । अत उपाधिविरहितः स्वाभाविकप्रतिबन्धो व्याप्तिस्तद्विशिष्टं व्याप्यं, स च उपाधिर्द्विविधः—शाङ्कितः, समारोपितश्च, यत्र साध्यव्यापकत्वसाधनाव्यापकत्वादिकं सन्दिग्धं स उपाधिः शाङ्कितः, यत्र साध्यव्यापकत्वसाधनाव्यापकत्वयोर्निश्चयः स समारोपितः, सदनुमाने तु वास्तवस्योपाधेरभावात् समारोपित एव

स्मारयति—"त्रिविधमनुमानमाख्यातम्" इति । तत्र सामान्यतो लक्षितमनुमानं विशेषतस्त्रिविधं, पूर्ववत्, शेषवत्, सामान्यतोदृष्टञ्चेति ।

तत्र(१)प्रथमं तावत् द्विविधम्—वीतमवीतं च । अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्, व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम् ।

तत्राऽवीतं शेषवत् । शिष्यते परिशिष्यते इति शेषः, स एव विषयतया यस्याऽस्त्यनुमानज्ञानस्य तच्छेषवत् । यदाहुः—"प्रसक्तप्रतिषेधे, अन्यत्राऽप्रसङ्गात् शिष्यमाणे सम्प्रत्ययः परिशेषः"(२)इति (न्यायभा-

---

भवति शङ्कितो वा, द्वयोरपि अनुकूलतर्कादिभ्यो निवृत्तिः, येन च–व्यापकेन प्रतिबद्धं–यन्निरूपितव्याप्तिविशिष्टं तद्व्यापकमित्यर्थः ।

(१) प्रथमतोऽनुमानं तावद्द्विविधमित्यर्थः ।

(२) साङ्ख्यमते उपादानोपादेययोस्तादात्म्यं स्वीक्रियते । तच्च भेदसमानाधिकरणोऽभेदः, तेन चाऽऽत्यन्तिकभिन्नत्वमात्यन्तिकाभेदश्च व्यावर्त्यते, अतः तद्धर्मत्वहेतुना पटे तन्तुभेदाभावे साधनीये न भेदमात्रं निषेध्यम्, तस्याऽनिष्टत्वात् । किन्तु अभेदासहचरितभेद एव निषेध्यः । अत एव भेदाभावमात्रसाधने अभेदो न सिद्ध्यति । तथा च पटे तन्तुना सहाऽऽत्य-

ध्यम्) । अस्य चाऽवीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते ।

वीतं द्वेधा—पूर्ववत्, सामान्यतोदृष्टं च । तत्रैकं (१)दृष्टस्वलक्षणसामान्यविषयं यत् तत्पूर्ववत्, पूर्वं प्रसिद्धं (२)दृष्टस्वलक्षणसामान्यमिति यावत् । तदस्य विषयत्वेना-

---

न्तिकाभेदस्य कार्यकारणभावादेवाऽप्रसक्त्या नैयायिकाभ्युपगतदिशा आत्यन्तिकभेदस्य प्रसक्तत्वात्तन्निषेधे परिशिष्यमाणं तादात्म्यमेव । तदेव 'न पटस्तन्तुभ्यो भिद्यते, तद्धर्मत्वात्' इत्यनुमानेन साध्यते । साध्यहेत्वोरन्वयव्याप्तेः पूर्वमप्रसिद्धत्वाद्भवतीदमनुमानं व्यतिरेकीति भावः । न्यायभाष्ये यद्यपि शब्दस्य जातिमत्त्वादनित्यत्वाच्च सामान्यविशेषसमवायेभ्यो निर्भक्तस्य द्रव्यकर्मान्यतरत्वे प्राप्ते तन्निषेधेन गुणत्वप्रतिपत्तिरेव परिशेष इत्युक्तम् । तथाऽपि न्यायवार्त्तिकतात्पर्यटीकायामिदं परिशेषोदाहरणं नाऽऽदरणीयं, व्यतिरेकिणो हि नामान्तरमिदं परिशेष इति मिश्रव्याख्यानात्तदनुसारेणाऽत्राऽऽयाह—'अस्य चेति । अग्रे—नवमकारिकायां न पटस्तन्तुभ्यो भिद्यते—'इत्यादिकमेव परिशेषोदाहरणमित्यर्थः ।

(१) दृष्टं स्वलक्षणं विशेषो यस्य, तथाविधं यत् सामान्यं तद्विषयमित्यर्थः ।

(२) अत्राऽपि दृष्टं स्वलक्षणं यस्यैवम्भूतं यत्

ऽस्त्यनुमानज्ञानस्येति पूर्ववत् । यथा धूमाद्वह्नित्व(१)सामान्यविशेषः पर्वतेऽनुमीयते, तस्य वह्नित्वसामान्यविशेषस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम् ।

अपरं च वीतं सामान्यतोदृष्टं (२)अदृष्टस्वलक्षणसामान्यविषयम् । यथेन्द्रियविषयमनुमानम् । अत्र हि रूपादिविज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते । यद्यपि करणत्वसामान्यस्य छिदादौ वास्यादि स्वलक्षणमुपलब्धम्, तथाऽपि यज्जातीयं रूपादिज्ञाने करणवत्त्वमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण । इन्द्रियजातीयं हि तत्करणम्, न चेन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्य-

---

सामान्यमित्यर्थः । तद्विषयतया यस्याऽस्त्यनुमानज्ञानस्य—अनुमितेस्तत् पूर्ववदित्यर्थः । यज्जातीयसाध्यं व्याप्तिज्ञानविषयस्तज्जातीयसाध्यविषयकानुमितिरित्यर्थः ।

(१) वह्नित्वसामान्यविशेषो नाम वह्निजातीयः ।

(२) अयमर्थः । यज्जातीयं साध्यं व्याप्तिज्ञानविषयस्तज्जातीयभिन्नविषयकानुमितिरित्यर्थः । अयं भावः । तद्धर्मावच्छिन्नाविधेयकानुमितिं प्रति तद्धर्मे व्यापकतावच्छेदकत्वज्ञानस्य कारणत्वेऽपि महानसीयवह्नीतरवन्ह्यभाववान् पर्वत इत्याकारकेतरविशेषबाधनिश्चयसत्त्वे महानसीयवन्ह्यनुमितौ लाघवामितिलाघव-

क्षगोचरोऽर्वाग्दृशाम्, यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निः । सोऽयं पूर्ववतः सामान्यतोदृष्टाद् सत्यपि वीतत्वेन तुल्यत्वे विशेषः । अत्र च दृष्टं दर्शनम्, सामान्यत इति सामान्यस्य, सार्वविभक्तिकस्तसिः । अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनं सामान्यतोदृष्टमनुमानमित्यर्थः । सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायां व्युत्पादितमिति नेहोक्तं विस्तरभयात् ।

(१)प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्र-

---

ज्ञानसत्त्वे वा वह्निव्याप्यधूमवानितिसामान्यपरामर्शादपि पर्वतो महानसीयवन्हिमानिति विशेषविषयकानुमितिर्या जायते सा सामान्यतोदृष्टानुमितिरित्यर्थः ।

( १ ) अयम्भावः। अगृहीतशक्तिकस्य शब्दस्य बोधानुपधायकत्वात् गृहीतशक्तिकस्यैव तत्स्वीकार्यम् । शक्तिग्रहश्चाऽनुमानाधीनः । तथा हि–प्रयोजकवृद्धेन गामानयेत्युक्ते तच्छ्रुत्वाऽपरः प्रयोज्यवृद्धो गवानयने प्रवर्तते, तं च प्रवर्तमानमुपलभ्य व्युत्पित्सुर्बालोऽस्य चेष्टा गवानयनविषयकप्रवृत्तिजन्या, चेष्टात्वात्, मदीयचेष्टावदित्यनुमानेन चेष्टाकारणीभूतां गवानयनविषयिणीं प्रवृत्तिमनुमायेयं प्रवृत्तिः गवानयनधर्मिककार्यताज्ञानजन्या, प्रवृत्तित्वात्, मदीयस्तनपानादिविषयकप्रवृत्तिव-

वृत्तिहेतुज्ञानानुमानपूर्वकत्वाच्छब्दार्थसम्बन्धग्रहणस्य,

दित्यनेन प्रवृत्तिकारणीभूतगवानयनकर्त्तव्यताज्ञानमनुमिमीते, अनन्तरश्चेदं गवानयनकर्तव्यताज्ञानं किञ्चित्कारणजन्यं, कादाचित्कत्वात्, घटादिवदिति किञ्चित्कारणं सामान्यतोऽनुमायेदं कर्तव्यताज्ञानं प्रयोजकवृद्धशब्दश्रवणजन्यं, तदन्वयव्यतिरेकानुविधायित्वात्, यो यदन्वयव्यतिरेकानुविधायी स तज्जन्यः, यथा दण्डान्वयव्यतिरेकानुविधायी घटो दण्डजन्यः, इत्यनेन तज्ज्ञानस्य शब्दश्रवणजन्यत्वं निश्चित्याऽनतिप्रसक्तः शब्दस्य तेनाऽर्थेन सह कश्चन सम्बन्धोऽस्तीति निश्चिनोति, कथमन्यथाऽस्माद्वाक्याद्गवानयनकर्तव्यतार्थ एव बुद्धः, न तु पटादिरूपार्थ इति नियमः सिद्ध्येत्? एवं सामान्येन विशिष्टार्थस्य विशिष्टवाक्येन सम्बन्धं निश्चित्याऽनन्तरमावापोद्वापाभ्यां तत्तच्छब्दस्य तत्तदर्थे सम्बन्धं निश्चिनोति, स एव सम्बन्धः शक्तिरित्युच्यते। सा च शक्तिरीश्वरेच्छारूपा पदार्थान्तरं वेत्यन्यदेतत्। सर्वथाऽस्ति कश्चन सम्बन्धविशेषः, तज्ज्ञानपूर्वक एव च शब्दार्थव्यवहार इत्याविवादम्। तथा च शाब्दबोधस्य शक्तिज्ञानपूर्वकत्वात् शक्तिज्ञानस्य चाऽनुमानाधीनस्य शाब्दबोधोपजीव्यत्वमस्तीत्युपजीव्यनिरूपणानन्तरमुपजीवकस्य निरूपणं कर्तव्यमित्युपजीव्योपजीवकभावसङ्गत्याऽनुमानानन्तरं शब्दं लक्षयतीत्यर्थः।

स्वार्थसम्बन्धज्ञानसहकारिणश्च शब्दस्याऽर्थप्रत्यायकत्वादनुमानपूर्वकत्वमित्यनुमानानन्तरं शब्दं लक्षयति–"आप्तश्रुतिराप्तवचनं तु" इति । आप्तवचनमिति लक्ष्यनिर्देशः, परिशिष्टं लक्षणम् । आप्ता प्राप्ता युक्तेति यावत् । आप्ता चाऽसौ श्रुतिश्चेति आप्तश्रुतिः । श्रुतिः–वाक्यजनितं वाक्यार्थज्ञानम् ।

तच्च स्वतःप्रमाणम्(१) । अपौरुषेयवेदवाक्यजनित-

(१) यद्यपि 'आप्तोपदेशः शब्दः'इतिगौतमसूत्रसमानानुपूर्वीकमेतल्लक्षणं, यद्यपि च वात्स्यायनीयभाष्ये 'आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्याऽर्थस्य चिख्यापयिषया प्रयोक्तोपदेष्टा, साक्षात्करणमर्थस्याऽऽप्तिः, तया वर्तत इत्याप्तः'इत्याप्तलक्षणमन्यथोपवर्ण्य 'तस्योपदेशः शब्दप्रमाणम्'इत्युक्तम् । तथाऽपि तन्मते वेदानां पौरुषेयत्वाभ्युपगमात्तादृशार्थकत्वं सम्भवति, परन्तु साङ्ख्यमते वेदानामपौरुषेयत्वादीश्वरानभ्युपगमाच्च वेदप्रतिपादितानामर्थानां केनाऽपि प्रमाणेन पुरुषोपलब्धिविषयत्वासम्भवात् प्रमाणान्तरेणाऽर्थोपलब्धृत्वं न भवतीत्याप्तशब्दस्य युक्त इत्यर्थः समुपवर्णितः । तथा चाऽपौरुषेयो वैदिक उपदेशः स्वर्गापूर्वदेवताविषयः प्रमाणमात्रस्य परतःप्रामाण्यानभ्युपगमान्निर्दोषतया वेदानां स्वतःप्रामाण्याभ्युपगमाच्च स युक्त उपपन्नः । लौकिक-

त्वेन सकलदोषाशङ्काविनिर्मुक्तेर्युक्तं भवति । एवं वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तं भवति ।

(१)आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः, सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः । तथा च आवट्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्तिजन्मस्मरणमात्मन उवाच "दशसु महाकल्पेषु विपरिवर्तमानेन मया" इत्यादिना ग्रन्थसन्दर्भेण ।

आप्तग्रहणेनाऽयुक्ताः शाक्य–भिक्षु–निर्ग्रन्थक–संसारमोचकादीनामागमाभासाः परिहृता भवन्ति । अ-

श्च आर्यम्लेच्छानां प्रमाणान्तरमूलो युक्तः, मानान्तराभावे तु अनाप्तः–अयुक्त इत्याभिप्रेत्य–'आप्ता चाऽसौ श्रुतिश्चेति कर्मधारयाङ्गीकरणम् । शब्दस्य प्रामाण्यपक्षे वृत्ते. शाब्दबोधात्मिकायाः प्रमात्वं, वृत्तेः प्रमाणत्वपक्षे वृत्तिप्रतिबिम्बितचैतन्यस्य प्रमात्वमित्यभिप्रेत्य श्रुतिशब्देन वाक्यजन्यज्ञानं सङ्गृहीतम् ।

(१) ननु सर्गादावादिविद्वान् कपिलो धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति, अतो न तदीयवाक्यं वेदमूलकं भवितुमर्हति, कथं तस्य प्रामाण्यमित्याशङ्कायामाह । आदिविदुषश्चेति ।

युक्तत्वं चैतेषां विगानात्(१) विच्छिन्नमूलत्वात्(२) प्रमाणविरुद्धार्थाभिधानाच्च, कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद्बोद्धव्यम्(३) ।

(४)तुशब्देनाऽनुमानाद्व्यवच्छिनत्ति । वाक्यार्थो हि

( १ ) पूर्वापरविरुद्धार्थकथनादित्यर्थः ।

( २ ) प्रमाणमूलत्वाभावादित्यर्थः ।

( ३ ) अनेन महाजनपरिगृहीतत्वाभावेन प्रामाण्यानुमापकहेत्वभाव उक्तः ।

( ४ ) बौद्धा वैशेषिकाश्च शब्दप्रमाणस्याऽनुमानेऽन्तर्भावं कुर्वन्ति, तन्मतं निरसितुमाह । तुशब्देनेति । अयम्भावः । अस्ति तावद्गौरस्तीत्यादिवाक्येभ्योऽस्तितावती गौरित्येवमाकारो विलक्षणो बोधः सर्वजनानुभवसिद्धः । तस्य विजातीयप्रमात्वमनभ्युपगम्याऽनुमितिरूपत्वं ताभ्यां समर्थनीयं, शब्दस्य च लिङ्गविधया तत्र कारणत्वमङ्गीकृत्याऽनुमानत्वं व्यवस्थापनीयं, तत्तु न सङ्गच्छते । अस्तित्वविशिष्टगोरूपवाक्यार्थविषयकज्ञानस्याऽनुमितित्वे गोः पक्षत्वेनाऽस्तित्वस्य च साध्यत्वेन सिद्धिर्वक्तव्या, न च शब्दस्य पक्षवृत्तित्वं विद्यते, भिन्नदेशत्वात्, पक्षधर्मो हि हेतुर्भवति, नाऽपक्षधर्मः । यद्युच्येत शक्तिरूपसम्बन्धेन शब्दस्तत्र वर्तत एवेति, तथाऽपि वाक्यार्थस्याऽशक्यतया तस्यैव प्रमेयत्वेन शक्तिसम्बन्धेन शब्दस्य तद्वृत्तित्वासम्भवात्, जिज्ञासितधर्मविशिष्ट-

प्रमेयः, न तु तद्धर्मो वाक्यम्, येन तत्र लिङ्गं भवेत् । न च वाक्यं वाक्यार्थं बोधयत् सम्बन्धग्रहणमपेक्षते, अभिनवकविरचितस्य वाक्यस्याऽदृष्टपूर्वस्याऽननुभूतचरवाक्यार्थबोधकत्वादिति ।

एवं प्रमाणसामान्यलक्षणेषु तद्विशेषलक्षणेषु च सत्सु, यानि प्रमाणान्तराण्युपमानादीनि प्रतिवादि-

स्यैव धर्मिणोऽनुमेयत्वेन हेतोस्तद्वृत्तित्वस्यैवाऽऽवश्यकत्वात्, अतोऽपक्षधर्मत्वान्न शब्दस्य लिङ्गत्वम् । किञ्च लिङ्गं साध्येन सह सम्बद्धत्वेन ज्ञायमानमनुमितिजनकं भवति, सम्बन्धज्ञानं च व्याप्तिज्ञानं, न च वाक्यस्य वाक्यार्थेन सह सम्बन्धः कश्चन विद्यते, पदार्थानामेव पदेन सह शक्तिरूपसम्बन्धाङ्गीकारात् । न च सम्बन्धज्ञानविलम्बेन वाक्यार्थज्ञाने विलम्बो दृश्यते, अगृहीतसम्बन्धस्याऽपि वाक्यस्याऽर्थावबोधकत्वदर्शनात्, हेतोश्च कुत्राऽपि सम्बन्धज्ञानानपेक्षस्याऽनुमापकत्वादर्शनेन शब्दस्य नाऽनुमापकत्वं वक्तुं शक्यम् । किञ्च यत्र वाक्यमप्यभिनवम्, वाक्यार्थश्चाऽलौकिकस्तत्र तयोर्व्याप्यव्यापकभावज्ञानस्य कथमप्यसम्भवेन तादृशवाक्यस्याऽनुमानत्वे सर्वजनानुभूतस्य तद्वाक्याज्जायमानस्य शाब्दबोधस्याऽनुत्पत्त्या प्रत्यक्षापलापप्रसङ्गः, अतोऽपि नाऽनुमानेऽन्तर्भावः, तदेतदाह । वाक्यार्थो हीत्यादि । विस्तरस्त्वाकरेऽनुसन्धेयः ।

भिरभ्युपेयन्ते तान्युक्तलक्षणेष्वेव प्रमाणेष्वन्तर्भवन्ति ।

तथा हि–(१)उपमानं तावत् 'यथा गौस्तथा गवयः' इति वाक्यम् । तज्जनिता धीरागम एव । (२)योऽप्ययं 'गवयशब्दो गोसदृशस्य वाचकः' इति प्रत्ययः, सो-

---

(१) केचन नैयायिकाः कीदृशो गवय इत्येवं नागरिकेण पृष्टो वनेचरः प्रसिद्धेन गवा साधर्म्यादप्रसिद्धं गवयं येन वाक्येन बोधयति, यथा–गौरिव गवय इति, तद्वाक्यमुपमानम् । एतदर्थकमेव 'प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्'इति सूत्रमपि इति वर्णयन्ति । तन्मतमुपन्यस्य दूषयति–उपमानं तावदित्यादिना । यद्यप्येवं नैयायिकानां प्रसिद्धं, तथाऽपि अस्य शब्दज्ञानादर्थे ज्ञानमिति शब्द एवाऽन्तर्भावः । नैयायिकोक्तात् 'आप्तोपदेशः शब्दः'इति लक्षणादप्यागमत्वमेव दृढीकृतं भवतीत्यर्थः ।

(२) 'समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थः'इतिन्यायभाष्यात् गवयशब्दशक्तिज्ञानमेवोपमितिः, एवम्भूतशक्तिग्राहकमुपमानमिति नैयायिका वर्णयन्ति, तस्याऽनुमानेनैव सिद्धत्वान्न प्रमाणान्तरत्वमभ्युपगन्तव्यमित्याह । योऽप्ययमित्यादि । अत्र गोसादृश्यं गवयशब्दशक्यतावच्छेदकतयोक्तमिति न भ्रमितव्यं, गवयत्वजात्यपेक्षया गोसादृश्यस्य गुरुत्वेन शक्यतानवच्छेदकत्वात्, किन्तु गवयत्वजातिपरिचायकतया तदुपादानमित्यवधेयम् ।

ऽप्यनुमानमेव । यो हि शब्दो यत्र वृद्धैः प्रयुज्यते, सोऽसति वृत्त्यन्तरे, तस्य वाचकः, यथा गोशब्दो गोत्वस्य । प्रयुज्यते चैवं गवयशब्दो गोसदृशे, इति तस्यैव वाचक इति तव ज्ञानमनुमानमेव ।(१)यत्तु ग-

(१) केचन नैयायिका यथा गौस्तथा गवय इत्यतिदेशवाक्यं श्रुत्वा वनं गतस्याऽयं गवयो गोसदृश इति यज्ज्ञानं तदुपमितिरित्याचक्षते, तद्दूषयति—यत्त्वित्यादिना । अयमर्थः । गवयज्ञानं हि चक्षुःसन्निकर्षजन्यत्वात्प्रत्यक्षरूपमिति न तत्करणमन्यदन्वेष्टव्यम् । यत्तु तस्मिन् सादृश्यमवसीयते, तज्ज्ञानं तु स्मरणात्मकमिति न प्रमात्वं, सुतरां तत्करणं न प्रमाणान्तरम् । ननु यद्यपि गोसदृशः कश्चिदिति सामान्यतोऽवगतं स्मर्यते तथाऽपि गोसादृश्यविशिष्टो गवयो न प्रागवगतः, न वा प्रत्यक्ष इति तज्ज्ञानस्य विजातीयप्रमात्वमभ्युपगन्तव्यमेवेति चेन्न । प्रत्युत्पन्नकारणजन्यं यदवगतविषयकं ज्ञानं तत् सङ्गतिः संवादोऽनुवाद इति चोच्यते, तच्च स्मृतिवदेवाऽनधिकविषयत्वादप्रमाणमतोऽतिदेशवाक्यावगतं यदनेन गृह्यते, तत्तावन्न प्रमेयं, यत्तु अनवगतं गवयस्वरूपं तस्य च सादृश्यविशिष्टत्वं, तत् प्रत्यक्षमेव । कथं पुनरुपलब्धगवयस्य स्मरणोत्तरकालं भवत् सादृश्यज्ञानं स्मरणान्तरितेन्द्रियव्यापारं प्रत्यक्षं ? इति चेदुच्यते । यावदिन्द्रियसम्बन्धस्तत्सर्वं प्रत्यक्षमेव, अतश्च स्म-

वयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत् प्र-
त्यक्षमेव । (१)अत एव स्मर्यमाणायां गवि गवयसा-

दृश्यस्य स्मर्यमाणविषये एव तस्याऽप्रामाण्यं, न गृह्यमाणविष-
येऽपि, सम्भवति हि एकस्याऽपि ज्ञानस्य विषयभे-
देन प्रामाण्यमप्रामाण्यं च, अतो विवेकेन स्मरणां-
शस्यैवाऽप्रामाण्यं, न ग्रहणांशस्याऽप्रमाणतेति, तस्मा-
दुपमानं प्रमाणमिच्छता सादृश्यविशिष्टोऽपूर्वः प्रत्य-
क्षानवगतः प्रमेयो वक्तव्यः, न चाऽसावस्ति, कदाचि-
त्कल्पनापोढप्रत्यक्षवादिनां सादृश्यविशिष्टगवयज्ञानं
प्रत्यक्षं न सम्भाव्येताऽपि, व्यवसायात्मकप्रत्यक्षवा-
दिनां तु नैयायिकानां जात्यादिवत् कुतो न सादृश्यं
प्रत्यक्षं ? अतः सन्निकृष्टे धर्मिणि विषये नोपमानस्य
किञ्चित् प्रमेयमस्ति, अतो न प्रमाणान्तरमुपमानम् ।

(१) येऽपि मीमांसकाः सादृश्यविशिष्टगवय-
दर्शनं गवि स्मरणमुत्पादयति, गवयसादृश्यविशिष्ट-
गोज्ञानमुपमितिरिति वर्णयन्ति, तद्दूषयति । अत एवेति ।
अत्र हि सादृश्यविशिष्टगवयदर्शनेन गोस्मरणं स्मरण-
त्वात्प्रमाणमेव न भवतीति न तत् प्रमेयं वक्तुमपि शक्यं,
केवलं सादृश्यविशिष्टं गोस्वरूपं गोवृत्तिसादृश्यं वा
प्रमेयं वक्तव्यं, किन्तु तन्नोपपद्यते, यतः सादृश्य-
स्य सामान्यधर्मरूपत्वेन गवये तस्य प्रत्यक्षत्वे गव्यपि प्र-
त्यक्षं सञ्जातमेव, यदि हि सादृश्यं भिन्नमभविष्यत्,
तर्हि एकत्र तस्य प्रत्यक्षविषयत्वेऽप्यन्यत्र प्रत्यक्षं ना-
ऽभविष्यत्, तदेव तु नेति कथं स्मर्यमाणगवि गव-

दृश्यज्ञानं प्रत्यक्षम् । न त्वन्यद्गवि सादृश्यम् । अन्यच्च गवये । भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्त्ती जात्यन्तरे सादृश्यमुच्यते । सामान्ययोगश्चैकः । स चेद्गवये प्रत्यक्षः, गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति, यत्र प्रमाणान्तरमुपमानं भवेत्, इति न

यसादृश्यस्य प्रत्यक्षविषयत्वं वक्तुं शक्यमित्यर्थः । यद्यपि पर्वतः प्रत्यक्षविषयः, वह्निश्च स्मर्यमाणः, तथाऽपि द्वयोर्वैशिष्ट्यस्य केनाऽपि प्रमाणेनाऽनवगतत्वात्तद्विषयकत्वेन यथाऽनुमानस्य पृथक्प्रामाण्यं, तथा गवयदर्शनेन सादृश्यस्य प्रत्यक्षत्वाद्गोश्च स्मर्यमाणत्वाद्द्वयोर्वैशिष्ट्यस्य केनाऽप्यनवगतत्वेन तद्विषयकत्वेनोपमानस्य पृथक् प्रामाण्यमभ्युपगन्तव्यमिति मीमांसकोक्तं युक्तमेव प्रतिभाति, तथाऽपि मदीया गौरेतद्गवयसदृशीत्याकारकज्ञानस्याऽनुमितित्वाङ्गीकारेणोपपत्तौ प्रमाणान्तरत्वं न स्वीकर्तव्यमिति साङ्ख्यानामाशयः । हेतुश्च गोनिष्ठसादृश्यप्रतियोगित्वादिति, अतो न पक्षधर्मत्वासिद्धिः, एवंविधानुमानानवतारदशायामपि गवयदर्शनेन सादृश्यविशिष्टगोज्ञानदर्शनाद्गवयसदृशत्वेन गामुपमिनोमीत्यनुव्यवसायाच्च पार्थक्यं स्वीकर्तव्यमिति मीमांसका वदन्ति, अत्र चाऽनुभव एव :तर्कस्य विश्रामेन निपुणा अनुभवमेव निरूपयन्तु । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

प्रमाणान्तरमुपपन्नम् ।

एवमर्थापत्तिरपि न प्रमाणान्तरम् ।

तथा हि—जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्याऽदृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानाम् । साऽप्यनुमानमेव । (१)यदा खल्वव्यापकः सन्नेकत्र नास्ति तदा

(१) अत्र मीमांसकाभिमतार्थापत्तिविषयसाधकमनुमानमित्थं—जीवंश्चैत्रो बहिरस्ति, विद्यमानत्वे सति गृहेऽभावात्, मच्छरीरवत् । अत्रैव व्याप्तिं दर्शयति । यदेति । यो हि परिच्छिन्न एकत्र नास्ति, तदाऽन्यत्राऽस्ति, यदान्यत्र नाऽस्ति, तदाऽत्राऽस्ति, इति सुकरो व्याप्तिग्रह इत्यर्थः । अत्र मीमांसका इत्थमाशङ्कन्ते—गृहे अविद्यमानत्वमात्रस्य बहिःसत्त्वसाधकत्वासम्भवाद्विद्यमानत्वविशिष्टस्यैव तस्य हेतुत्वं वक्तव्यम्, एवञ्च विद्यमानत्वाविद्यमानत्वयोः परस्परं विरोधादेकत्र चैत्रे तयोरवस्थानमनुपपन्नमित्यसिद्धोऽयं हेतुः, एवमविद्यमानत्वविशिष्टे विद्यमानत्वस्यैवाऽसम्भवेनाऽऽश्रयासिद्धश्च, ततश्च सत्त्वस्यैवाऽभावेन तद्विशेषबहिःसत्त्वरूपसाध्याभावेन बाधश्चेति, तामिमामाशङ्कां विषयभेदेनाऽविरोधं प्रतिपादयन् परिहरति—न च चैत्रस्येत्यादिना । क्वचित्सत्त्वेन-अनिर्दिष्टस्थलनिरूपितसत्त्वेन । गृहाभावः-गृहरूपदेशविशेषनिरूपितसत्त्वाभावः । अपह्नोतुम्—अपलपितुम् । येन—अविशेषितयोस्तयोर्विरोधेन विशि-

ऽन्यत्रास्ति । यदाऽव्यापक एकत्राऽस्ति तदाऽन्यत्र नाऽस्ति, इति सुकरः स्वशरीरे व्याप्तिग्रहः । तथा च सतो गृहाभावदर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानमेव । न च चैत्रस्य क्वचित्सत्त्वेन गृहाभावः शक्योऽपह्नोतुम्, येनाऽसिद्धो गृहाभावो बहिर्भावे न हेतुः स्यात् । न च गृहाभावेन वा सत्त्वमपह्नूयते, येन सत्त्वमेवाऽनुपपद्यमानमात्मानं न बहिरवस्थापयेत् ।

तथा हि—चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं विरुध्यते, गृहसत्त्वं वा ? न तावद्यत्रकचन सत्त्वस्याऽस्ति विरोधो गृहासत्त्वेन, भिन्नविषयत्वात् । देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक(१)

---

घस्य हेतोरसिद्धत्वेन बहिःसत्त्वसाधकत्वं न स्यात्, तथा विरोधो नाऽस्ति, विषयभेदात्, इत्याशयः । एवमग्रेऽपि । तथा च नाऽऽश्रयासिद्धिर्न वा बाध इति भावः ।

(१) जीवित्वाश्रयस्य पक्षीकृतत्वेन सत्त्वमाश्रयसामान्यमाक्षिपद्देशसामान्यमप्याक्षिपति, देशसामान्यमाक्षिपता च तेन तन्मध्यवर्तिनो गृहरूपदेशस्याऽप्याक्षेपेण प्राप्ततया पक्षे प्राप्तत्वात्समानविषयतया भवति विरोधः, तथा चाऽऽश्रयासिद्धः, स्वरूपासिद्धो वा हेतुरिति शङ्कते । देशेति । गृहसत्त्वस्य पाक्षि-

इति समानविषयतया विरोध इति चेत्, प्रमाणविनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात्। नाऽपि प्रमाणनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वं च व्यपनेतुमर्हतीति युक्तम्। गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वं विरुध्यते, न तु सत्त्वमात्रम्, तस्य तत्रौदासीन्यात्। तस्माद्गृहाभावेन लिङ्गेन सिद्धेन सतो बहिर्भावोऽनुमीयत इति युक्तम्।

(१)एतेन—'विरुद्धयोः प्रमाणयोर्विषयव्यवस्थया-

---

कत्वेन सन्दिग्धतया प्रमाणनिश्चितगृहासत्त्वप्रतिक्षेपकत्वासम्भवेन विरोधाभावान्नाऽऽश्रयासिद्ध्यादिकमिति परिहरति—प्रमाणविनिश्चितस्येत्यादिना।

(१) असत्त्वं प्रत्यक्षप्रमाणस्य विषयः, सत्त्वं च ज्योतिःशास्त्रस्य, अतस्तुल्यबलयोर्द्वयोः प्रमाणयोर्विरोधप्रसक्तौ प्रत्यक्षस्य गृहासत्त्वविषयकत्वेन शास्त्रस्य च बहिःसत्त्वविषयकत्वेनाऽविरोधापादनमर्थापत्तेर्विषय इति मतान्तरं निराचष्टे—एतेनेत्यादिना। एतेन—विरोधाभावप्रदर्शनेन। अवच्छिन्नानवच्छिन्नयोः—गृहावच्छिन्नासत्त्वानवच्छिन्नसत्त्वयोः सामान्यविशेषभूतयोर्विरोधाभावेन तद्बोधकयोः प्रमाणयोरपि वि-

ऽविरोधापादनमर्थापत्तेर्विषयः' इति निरस्तम्, अव-च्छिन्नानवच्छिन्नयोर्विरोधाभावात् । उदाहरणान्त-राणि(१)चार्थापत्तेरेवमेवानुमानेऽन्तर्भावनीयानि । तस्मान्नाऽनुमानात्प्रमाणान्तरमर्थापत्तिरिति सिद्धम् ।

(२)एवमभावोऽपि प्रत्यक्षमेव । न हि भूतलस्य

---

रोधाप्रसक्त्या तच्छमनार्थं प्रमाणान्तरस्वीकारस्य व्यर्थ-त्वादित्यर्थः ।

(१) यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादीनि ।

(२) अनुपलब्धेः प्रमाणान्तरत्वमिष्यते भाट्टै-स्तत् खण्डयति—अभावोऽपीत्यादिना । अभावोऽपि-अभावज्ञानमपि, प्रत्यक्षमेव-प्रत्यक्षमेव । अयमर्थः । यदि अधिकरणादतिरिक्तोऽभावो नाम साङ्ख्यैरतिरिक्तः प-दार्थः स्वीक्रियेत तर्हि तस्येन्द्रियेणाऽसन्निकृष्टस्य ज्ञानाय घटानुपलब्धिरूपं प्रमाणान्तरं स्वीकर्तव्यं भवेत्, स एव तु नाऽस्ति, साङ्ख्यमते चितिशक्तिं विना सर्वस्यैव पदार्थस्य प्रतिक्षणपरिणामितया घट-विशिष्टभूतलापेक्षया केवलभूतलरूपेणाऽभावपदाल-म्बनपरिणामस्य सम्भवित्वेन तस्य रूपादिविशि-ष्टत्वेन च प्रत्यक्षविषयत्वयोग्यत्वान्नाऽस्ति प्रत्यक्षावि-षयः कश्चन प्रमेयः, अतो न प्रमाणान्तरमनुपलब्धिः । यानि चाऽभावस्याऽनतिरिक्तत्वपक्षे आधाराधेयभावा-नुपपत्त्यादीनि दूषणानि, तानि नाऽस्मिन् पक्षे स-म्भवन्ति । तथा हि—आधाराधेयभाव एकस्मिन्नपि

परिणामविशेषात् कैवल्यलक्षणादन्यो घटाभावो नाम । प्रतिक्षणपरिणामिनो हि सर्वे एव भावाः, ऋते चितिशक्तेः । स च परिणामभेद ऐन्द्रियक इति नाऽस्ति प्रत्यक्षानवरुद्धो विषयो यत्राऽभावाह्वयं प्रमाणान्तरमभ्युपेयेतेति ।

---

वादिभिरभ्युपगतः । यथा–इह वने तिलकाः, घटाभाभावो घटाभाववानित्यादौ, अतो न तेन भेदः साधयितुं शक्यः ।

'भावान्तरमभावोऽपि कयाचित्तु व्यपेक्षया ।
स्वरूप पररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते किञ्चित्कैश्चिद्रूपं कदाचन–'

इति वृद्धोक्तप्रकारेण सर्वस्यैव पदार्थस्य स्वरूपेण भावत्वं पररूपेणाऽभावत्वमितिपक्षे एकस्यैव देवदत्तस्य स्वरूपेण प्रतीतौ अन्यानपेक्षत्वेऽपि पितृत्व–पुत्रत्व–जामातृत्व–पौत्रत्वाद्यनेकधर्मैर्निरूप्यमाणस्य स्वरूपभेदाभावेऽपि भिन्नपदार्थसापेक्षप्रतिपत्तिकत्वदर्शनेन गुणगुण्यादीनामभेदमते घटाभिन्नरूपस्य प्रतीतौ चक्षुःसापेक्षत्वस्य रसरूपेण प्रतीतौ रसनासापेक्षत्वस्य दर्शनेन च जले गन्धरसाद्यभावानां जलात्मकत्वाविशेषेऽपि रसाद्यभावत्वेन रूपेण तत्तदिन्द्रियजन्यप्रत्यक्षविषयत्वं, नियमतः प्रतियोगिसापेक्षप्रतिपत्तिकत्वं च सम्भवतीति न किञ्चिदवद्यम् । अन्यत्सर्वं सुगमम् ।

सम्भवस्तु, यथा खार्यां द्रोणाढकप्रस्थाद्यवगमः। स चाऽनुमानमेव। खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्यां द्रोणादिसत्त्वमवगमयति।

यच्चाऽनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रम्—'इति होचुर्वृद्धाः'—इत्यैतिह्यम्। यथा 'इह वटे यक्षः प्रतिवसति' इति, न तत् प्रमाणान्तरम्। अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात्। आप्तवक्तृकत्वनिश्चये त्वागम एव, इत्युपपन्नं "त्रिविधम्प्रमाणम्" इति।

॥ ५ ॥

एवं तावद्व्यक्ताऽव्यक्तज्ञलक्षणप्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानि। तत्र व्यक्तं पृथिव्यादि स्वरूपतः पांसुलपादो हालिकोऽपि प्रत्यक्षतः प्रतिपद्यते, पूर्ववता चाऽनुमानेन धूमादिदर्शनात् वह्न्यादीनि चेति, तद्व्युत्पादनाय मन्दप्रयोजनं शास्त्रमिति दुरधिगममनेन व्युत्पाद्यम्। तत्र यत् प्रमाणं यत्र शक्तं तदुक्तलक्षणेभ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति—

सामान्यतस्तु दृष्टात्
अतीन्द्रियाणां प्रतीतिरनुमानात्॥
तस्मादपि चाऽसिद्धम्
परोक्षमाप्तागमात् सिद्धम्॥ ६॥

"सामान्यतः" इति । तुशब्दः प्रत्यक्षपूर्ववद्भ्यां विशिनष्टि(१) । सामान्यतोदृष्टादनुमानादतीन्द्रियाणां प्रधानपुरुषादीनां प्रतीतिः—चितिच्छायापत्तिर्बुद्धेरध्यवसाय इत्यर्थः । उपलक्षणं चैतत्, शेषवत इत्यपि द्रष्टव्यम् ।

तत्किं सर्वेष्वतीन्द्रियेषु सामान्यतोदृष्टमेव प्रवर्त्तते ? तथा च यत्र तन्नाऽस्ति, महदाद्यारम्भक्रमे स्वर्गापूर्वदेवतादौ च(२), तत्र तेषामभावः प्राप्त इत्यत आह—"तस्मादपि" इति । तस्मादपीत्येतावतैव सिद्धे चकारेण शेषवत इत्यपि समुच्चितम् ।

॥ ६ ॥

स्यादेतत्, यथा गगनकुसुमकूर्मरोमशशविषाणादिषु प्रत्यक्षमप्रवर्तमानं तदभावमवगमयति, एवं प्रधानादि-

---

(१) प्रत्यक्षेण पूर्ववता चाऽनधिगतं यत्तत्सामान्यतोदृष्टात्सिद्ध्यतीत्यर्थः ।

(२) तद्व्याप्तिविशिष्टलिङ्गाभावादिति शेषः । 'प्रकृतेर्महान्—'इत्यादिना प्रतिपादितक्रमे, 'यन्न दुःखेन सम्भिन्नं—'इत्याद्यागमप्रतिपादिते स्वर्गे, यागस्य कालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्या कल्पनीयेऽपूर्वे, 'वज्रहस्तः पुरन्दरः'इत्याद्यागमप्रतिपादितासु देवतासु चेत्यर्थः ।

ष्वपि। तत्कथं तेषां सामान्यतोदृष्टादिभ्यः सिद्धिः ? इत्यत आह—

अतिदूरात् सामीप्यात्
इन्द्रियघातान्मनोऽनवस्थानात् ॥
सौक्ष्म्याद्व्यवधानात्
अभिभवात् समानाभिहाराच्च ॥ ७ ॥

"अतिदूरात्" इति। अनुपलब्धिरिति वक्ष्यमाणं सिंहावलोकनन्यायेनाऽनुषञ्जनीयम्*। यथा उत्पतन् वियति पतत्री अतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते। सामीप्यादित्यत्राऽप्यतिरनुवर्तनीयः+। यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते। इन्द्रियघातोऽन्धत्वबाधिरत्वादिः। मनोऽनवस्थानात्—यथा कामाद्युपहतमनाः स्फीतालोकमध्यवर्तिनामिन्द्रियसन्निकृष्टमप्यर्थं न पश्यति। सौक्ष्म्यात्—यथेन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति।

*सिंहो यथा किञ्चिद्दूरं गत्वा पश्चादवलोक्य पुनर्गच्छति तथा अनुपलब्धिरिति पदं अतिदूरादितिपदोच्चारणानन्तरं पठित्वा पुनः सामीप्यादितिपदानन्तरं पठनीयमित्यर्थः।

+यथाश्रुते सामीप्यस्य प्रत्यक्षानुकूलत्वेन तस्य प्रतिबन्धककोटौ परिगणनानुपपत्तेः।

व्यवधानात्—यथा कुड्यादिव्यवहितं राजदारादिकं न पश्यति । अभिभवात्—यथाऽहनि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यति । समानाभिहारात्—यथा तोयदात्रिमुक्तानुदबिन्दून् जलाशये न पश्यति ।

चकारोऽनुक्तसमुच्चयार्थः । तेनाऽनुद्भवोऽपि सङ्गृहीतः । तद्यथा क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न पश्यति(१) ।

एतदुक्तं भवति । न प्रत्यक्षनिवृत्तिमात्राद्वस्त्वभावो भवति, अतिप्रसङ्गात् । तथा हि—गृहाद्विनिर्गतो गृहजनमपश्यंस्तदभावं विनिश्चिनुयात्, न त्वेवम् । अपि तु योग्यप्रत्यक्षनिवृत्ते(२)रयमभावं विनिश्चिनोति । न च प्रधानपुरुषादीनामस्ति प्रत्यक्षयोग्यता, इति न तन्निवृत्तिमात्रात्तदभावनिश्चयो युक्तः प्रामाणिका-

(१) सत्कार्यवादिमते सत एवोत्पादेन दुग्धावस्थायां दध्याद्यस्त्येवेत्यनुद्भवादेव तस्य न प्रत्यक्षमिति भावः ।

(२) योग्यानुपलब्धिसहकृतादिन्द्रियादित्यर्थः । तेन न पूर्वापरविरोधः ।

नामिति(१)।

॥ ७ ॥

कतमत्पुनरेतेषु कारणं प्रधानादीनामनुपलब्धौ ? इत्यत आह—

सौक्ष्म्यात्तदनुपलब्धि-
र्नाऽभावात्, कार्यतस्तदुपलब्धेः ॥
महदादि तच्च कार्यं
प्रकृतिसरूपं विरूपं च ॥ ८ ॥

"सौक्ष्म्यात्" इति। अथाऽभावादेव सप्तमरसवदेतेषामनुपलब्धिः कस्मान्न भवति ? इत्यत आह—"नाऽभावात्" इति। कुतः ? "कार्यतस्तदुपलब्धेः", 'तत्'इति प्रधानं परामृशति। पुरुषोपलब्धौ तु प्रमाणं वक्ष्यति, "सङ्घातपरार्थत्वात्'—(का० १७) इति। दृढतरप्रमाणावधारिते हि प्रत्यक्षमप्रवर्तमानमयोग्यत्वान्न प्रवर्तते इति कल्प्यते। सप्तमस्तु रसो न प्रमाणेनाऽवधारित इति न तत्र प्रत्यक्षस्या योग्यता शक्याऽध्यवसातुमित्यभिप्रायः।

(१) प्रमाणसिद्धानां प्रधानादीनामित्यर्थः। तथा चाऽप्रामाणिकानां गगनकुसुमादीनामनुपलब्ध्याऽभावनिश्चयेऽपि प्रकृते न तथेति भावः।

किं पुनस्तत्कार्यं यतः प्रधानानुमानम्? इत्यत आह— "महदादि तच्च कार्यम्" इति । एतच्च यथा गमकं तथोपरिष्टा(१)दुपपादयिष्यते । तस्य च कार्यस्य विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये आह—"प्रकृतिसरूपं विरूपं च" इति । एते तूपरिष्टा(२)द्विभजनीये इति ।

॥ ८ ॥

कार्यात् कारणमात्रं गम्यते । सन्ति चाऽत्र वादिनां विप्रतिपत्तयः । तथा हि केचिदाहुः—(३)'असतः सत् जायते' इति, 'एकस्य सतो विवर्तः कार्यजातं न

(१) 'भेदानां परिमाणात्—' इति कारिकायामिति भावः ।

(२) 'हेतुमदनित्यम्—' इत्यादिकारिकायामित्यर्थः ।

(३) केचित्—शून्यवादिनो बीजमृत्पिण्डप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिदर्शनादभावादेव भावोत्पत्तिमाहुः । दर्शयन्ति चाऽभावाद्भावोत्पत्तिं 'नाऽनुपमृद्य प्रादुर्भावात्' इति । तथा च जगदुत्पत्तेः पूर्वं कार्यं कारणं वा किमपि नाऽऽसीत् । किं तु शून्यमेव बभूव, ततोऽर्थक्रियाकारित्वलक्षणसत्त्वयोगि किञ्चित्कालावस्थायि कार्यं जायते, तस्याऽपि न स्वरूपेण सत्त्वम् ।

वस्तुसत्'इत्यपरे(१),अन्ये तु(२)'सतः असत् जायते' इति, 'सतः सत् जायते' इति वृद्धाः (३)।

तत्र पूर्वस्मिन् कल्पत्रये प्रधानं न सिद्ध्यति(४)। सुखदुःखमोहभेदस्वरूपपरिणामशब्दाद्यात्मकं हि ज-

---

(१) अपरे—वेदान्तिनः। एकस्य सद्रूपब्रह्मणोऽज्ञानेन परिकल्पितमिदं जगन्न सत्, नाऽप्यसत्, नाऽपि सदसत्, विरोधात्, किन्तु मिथ्या, उपादानत्वाभिमतवस्तुविषमसत्ताकत्वे सति तदवस्थाविशेषरूपत्वस्यैव तद्विवर्तत्वात्। तथा चैतन्मते उपदानोपादेययोस्तादात्म्यं न वास्तवं, किन्तु कल्पितमेवेति।

(२) अन्ये नैयायिकाः। सतो रूपरसादिविशिष्टात् परमाणोः सकाशादुत्पत्तेः प्रागविद्यमानं द्व्यणुकादिलक्षणं रूपरसादियुक्तं कार्यं जायते इति वदन्ति, एतन्मते च कार्यकारणयोर्भेदः।

(३) सत्कार्यवादिनः साङ्ख्याः।

(४) कल्पत्रये—असद्वादविवर्तवादासत्कार्यवादेषु, स्वाभिमतं प्रधानं न सिद्ध्यति, यतः सुखदुःखमोहरूपा ये भेदाः–विशेषाः, तद्वत् यत्स्वरूपं–तेन रूपेण परिणामो यस्य एवंभूता ये शब्दस्पर्शादयस्तदात्मकमिदं जगत् स्वकारणस्य सत्त्वरजस्तमःस्वभावस्वरूपं प्रधानत्वमनुमापयति, कार्यं हि यद्गुणकं तादृशमेव कारणमपि सिद्ध्यति, यथा रक्तं पटमुपलभ्य रक्तानामेव

तन्तूनामनुमानं भवति, कार्यकारणयोः सारूप्यस्य नियतत्वात्, तथा च प्रकृते कार्यं चेत्सुखदुःखमोहात्मकमुपलभ्यते, यथा एकैव स्त्री स्वामिनं सुखयति, सपत्नीर्दुःखयति, पुरुषान्तरं मोहयति, एवमेव सर्वे पदार्था द्रष्टव्याः, तर्हि तत्कारणेनाऽपि सुखदुःखमोहात्मकेनैव भवितव्यं,तत्र कारणे येयं सुखात्मता तत्सत्त्वं, या दुःखात्मता तद्रजः, यन्मोहात्मत्वं तत्तमः, सत्त्वरजस्तमआत्मकत्वमेव च कारणस्य साङ्ख्याभिमतं प्रधानत्वं, तच्च कदा सिध्येत् ? यदा हि कार्यकारणयोरभेदो भवेत्, असत्कारणवादश्चेदङ्गीक्रियेत, तर्हि असत् निरुपाख्यं यत्कारणं तत् सुखादिरूपशब्दाद्यात्मकं कथं स्यात् ? सदसतोस्तादात्म्यासम्भवात् । अत्राऽसत्त्वं नाम कचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्, अस्ति चेदं शशशृङ्गादौ, न तु निरुपाख्यत्वमसत्त्वं, तद्धि यदि शब्दवृत्त्यविषयत्वं तदाऽसम्भवः, निरुपाख्यादिपदेनैव वृत्तिसम्बन्धेन शशशृङ्गादीनां सम्बध्यमानत्वात्, निरुपाख्यादिपदानामलीके अनुभावकत्वरूपशक्तिविरहेऽप्यननुभवरूपमलीकविषयकाविकल्पं प्रति योगेन लक्षणया सङ्केतविशेषेण वाऽलीकोपस्थितिद्वारा जनकत्वमावश्यकं, तादृशविकल्पस्य साक्षिसिद्धत्वात्, 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति पातञ्जलसूत्रेण तादृशविकल्पस्य सद्रूपवस्त्वविषयकस्य शब्दज्ञानजन्यत्वस्योक्तत्वात्,अत एव "वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति वृत्तिज्ञा-

